कारिकावली with सिद्धान्तमुक्तावली of श्री विश्वनाथ पञ्चानन भट्टाचार्य - Edited with exhaustive Notes on difficult portions by शास्त्री जीवराम लल्लूराम.

2/e, गुजराती Printing Press, Mumbai, 1923.

Philosophy

(12)

Bill No. 57 07-08-08

2008-09 7

9350-0536

# कारिकावली

## सिद्धान्तमुक्तावलीसहिता




प्रकाशक और विक्रेताः—

गुजराती प्रिन्टिंग प्रेस,

सासुन बिल्डिंग,

एलफिन्स्टन, सर्कल, कोट, मुंबई, नं. १.





# "गुजराती" प्रिन्टिंग प्रेसस्थानि

## क्रय्य-संस्कृत-पुस्तकानि।

सासुन बिल्डिंग, एल्फिन्स्टन सर्कल, कोट, मुंबई नं. १.



### धर्मशास्त्रग्रन्थाः

**मनुस्मृतिः**--कुल्लूकभट्टकृतटीकया सहिता। ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता सूक्ष्मेक्षिकया संशोधिता च।

मूल्यम् २-४-०

**पारस्करगृह्यसूत्रम्**—पंचटीकोपेतम् (१) श्रीकर्कोपाध्याय-(२)जयराम-(३) हरिहर-(४) गदाधर—(५) विश्वनाथप्रणीत-भाष्यपञ्चकसमलंकृतम्-कामदेवभाष्यसहितवाप्यादिप्रतिष्ठाकण्डिकाशौचसूत्रहरिहरभाष्योपेतस्नानसूत्र-कर्क--गदाधरकृतभाष्य-कृष्णमिश्रकृतश्राद्धकाशिकोपेत—श्राद्धसूत्र--भोजनसूत्ररूपपरिशिष्टसहितं च।

मू. ६-८-०

**विदुरनीतिः**—विषमपदटिप्पणसमेता। श्रीमहाभारते उद्योगपर्वांतर्गतप्रजागरपर्वणि महाबुद्धिमतो विदुरस्य राजानं धृतराष्ट्रं प्रति सदुपदेशः। अत्र सर्वसाधारणी नीतिविद्या संक्षेपत उपदिष्टाऽस्ति। तदिदं नीतिविद्याबुभुत्सूनां जनानामतीवोपयोगी भविष्यतीति।

मू. ०-६-०

### वेदांतग्रन्थाः

**वेदान्तरहस्यम्**--वेदान्तवागीशभट्टाचार्यविरचितम्। अत्राद्वैतमतसिद्धान्तो निरूपितः। उपपत्तिश्च प्रदर्शिता। भाषाऽतिसरला प्रौढा च।

मू. ०-१-०

**विशिष्टाद्वैतमतविजयवादः**—नरहरिपण्डितकृतः। अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम्।

मू. ०-१-०

**विशिष्टाद्वैताधिकरणमाला**-पञ्चनदीयपण्डितसुदर्शनाचार्यविरचिता। अत्र अथशब्दस्यानन्तर्यपरमतःशब्दस्य च कर्मज्ञानवृत्ततापरत्वं, हिरण्यगर्भादिजीवानां परमेश्वरनिरासः, योगमतनिरासः, ब्रह्मणः प्रपञ्चोपादानत्वं च, सृष्टौ वैषम्यं कर्मापेक्षम्, पशुपतिमतनिरासः भागवतमतसंस्थापनम्, इत्यादयो विषया रामानुजमतेन समङ्निरूपिताः।

मू. १-०-०

# KARIKAVALI

And a Commentary called
SIDHDHANT MUKTAVALI
BY
SHRI VISHVANATH PANCHANANA
BHATTACHARYA

EDITED WITH NOTES ON DIFFICULT PORTIONS
BY
SHASTRI JIVARAM LALLURAM

( SECOND EDITION )

GUJARATI PRINTING PRESS,
BOMBAY.

Shaka 1845 A. D. 1923



॥ श्रीः ॥

श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचिता

# कारिकावली ।

## सिद्धान्तमुक्तावलीसहिता

रैक-लल्लुरामतनुजनुषा जीवरामशास्त्रिणा
विषमस्थलोपयुक्तटिप्पणीनिवेशनपुरःसरं
संशोधिता ।

सा च
मुम्बय्यां
'गुजराती' प्रिंटिंग-मुद्रणयन्त्राधिपतिना
प्राकाश्यं नीता ।

शके: १८४५ सन १९२३



॥ श्रीहरिः ॥

# प्रस्तावना



अनाद्यनन्तसंसारचक्रे स्वोपार्जितशुभाशुभकर्मपरिपाकवशाद् बम्भ्रम्यमाणानां संस्कृतप्राणिनां सर्वथैतादृशी शेमुषी जायतेऽहं कः ? कस्मादागतः ? कुत्र गमिष्यामि ? संसारचक्रस्य कोऽपि नेता वर्त्तते न वा ? वर्त्तते चेत्कीदृशः ? कुत्र वर्त्तते ? इत्याद्यनेकोर्मयः स्वान्ते प्रादुर्भवन्ति । तत्प्रशमानार्थमेव दार्शनिकक्रियायाः प्रादुर्भावः । तत्प्रणेतारश्च कपिलकणादगौतमपतञ्जलिजैमिनिव्यासाख्याः षण्महर्षयः । दर्शनानि च सांख्यवैशेषिकन्यायपातञ्जलमीमांसावेदान्ताख्यानि षट् । यद्यपि चार्वाकबौद्धबृहस्पतिप्रभृतिनास्तिककोटिप्रविष्टानां दर्शनानि समुपलभ्यन्ते तथापि भारतीयवैदिकमतावलम्बिन्यः संस्कृतप्रजाः सांप्रतकाले संमानपूर्वकं तानि नाङ्गीकुर्वन्ति । यद्यपि–आस्तिकनास्तिकव्यवहारबीजं तु " नास्तिको वेदनिन्दकः " इति मानवीयमेव तथापि " अस्ति नास्ति दिष्टं मतिः " । ४ । ४ । ६० । अस्ति परलोक इत्येवं मतिर्यस्य स आस्तिकः । नास्ति परलोक इत्येवं मतिर्यस्य स नास्तिकः–इति पाणिनिपतञ्जलिनिर्मितसूत्रभाष्याभ्यां समुत्पन्नेन शब्दद्वयेन निश्चीयते शक्तिग्रहो दर्शनद्वयसाधारणः। परस्परविचारसांकर्यादुभयविधान्यपि दर्शनानि सध्रीचीनान्येवेति वयम् । किं चादिशंकराचार्यसमयात्प्राक् केनापि वैदिकमतावलम्बिनास्तिकविदुषास्तिकदर्शनखण्डनाय नोच्छ्वसिता लेखनी तेनैव व्यासदर्शनस्य द्वितीयाध्यायस्य द्वितीयपादारम्भे " सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते " इत्यादिनोट्टङ्कितम् । अत्र ब्रूमः, किं व्यासदर्शनमेव सम्यग्दर्शनमितराण्यसम्यग्दर्शनानीति ! यद्येवं स्यात्तर्हि भगवता व्यासेन किमिति यत्र तत्रेतिहासपुराणेषु दर्शनकाराणां कपिलादिमहर्षीणां प्रशंसा कृता ? दार्शनिकसिद्धान्तखण्डनाय प्रवर्त्तकस्याचार्यवर्यस्य षड्दर्शनस्थापनाचार्यजगद्गुरुश्रीमच्छंकराचार्येत्यादिस्वबिरुदावल्यां पूर्वविशेषणं केनाप्यर्वाचीनतत्पीठस्थापरशंकराचार्येण प्रक्षिप्तमिति भाति । आस्तिकदर्शनान्तर्गतयोर्वैशेषिकन्यायदर्शनयोः संक्षिप्तसारभूतार्थावबोधिका " न्यायसिद्धान्तमुक्तावली " इति सुप्रसिद्धा वङ्गदेशीयविद्वद्वर्यश्रीविश्वनाथपञ्चाननभट्टाचार्येण विरचिता सा चेयं महता परिश्रमेण संशोध्य विषमस्थलात्युपयुक्तटिप्पण्या समलंकृतास्ति । अस्याः संशोधनकर्मण्यस्मत्सुहृद्भिः बाक्रे इत्युपाह्वयैर्महादेवशास्त्रिभिः साहाय्यं कृतमतस्तेषामुपकारं मुहुर्मुहुः स्मरामीति शम् ।

विद्वत्कृपाकाङ्क्षी

( रैक ) जीवराम लल्लुभाईशास्त्री



# ॥ विषयानुक्रमः ॥







| विषयः | पृष्ठम् . |
|---|---|

॥ इति विषयानुक्रमः समाप्तः ॥



# ॥ कारिकावली ॥



नूतनजलधररुचये गोपवधूटीदुकूलचौराय । तस्मै कृष्णाय नमः संसारम-
हीरुहस्य बीजाय ॥ १ ॥ द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् । समवाय-
स्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥ क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो
मनः । द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥ ३ ॥ स्पर्शः संख्या परि-
मितिः पृथक्त्वं च ततः परम् । संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥ ४ ॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम् । द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द
एव च ॥ ५ ॥ उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा । प्रसारणं च गमनं कर्मा-
ण्येतानि पञ्च च ॥ ६ ॥ भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च । तिर्यग्गमनम-
प्यत्र गमनादेव लभ्यते ॥ ७ ॥ सामान्यं द्विविधं प्रोक्तं परं चापरमेव च । द्रव्या-
दित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥ परभिन्ना तु या जातिः सैवापरत-
योच्यते । द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥ व्यापकत्वात्परापि
स्याद्व्याप्यत्वादपरापि च । अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥
घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः । तेषु जातेश्च संबन्धः समवायः प्रकी-
र्तितः ॥ ११ ॥ अभावस्तु द्विधान्योन्यसंसर्गाभावभेदतः । प्रागभावस्तथा ध्वंसो-
ऽप्यत्यन्ताभाव एव च ॥ १२ ॥ एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।
सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥ द्रव्यादयः पञ्च भावा अनेके
समवायिनः । सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥ सामान्यपरिही-
नास्तु सर्वे जात्यादयो मताः । पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥
अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता । कारणत्वं भवेत्तस्य त्रैविध्यं परिकी-
र्तितम् ॥ १६ ॥ समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् । एवं न्यायनय-
ज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥ यत्समवेतं कार्यं भवति ज्ञेयं तु समवा-
यिजनकं तत् । तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥ १८ ॥ येन
सह पूर्वभावः कारणमादाय वा यस्य । अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभाववि-
ज्ञानम् ॥ १९ ॥ जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते । अतिरिक्त-
मथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥ २० ॥ एते पञ्चान्यथासिद्धा दण्डत्वा-
दिकमादिमम् । घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥ २१ ॥ तृतीयं तु
भवेद्व्योम कुलालजनकोऽपरः । पञ्चमो रासभादि स्यादेतेष्वावश्यकस्त्वसौ ॥२२॥
समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् । गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायि-
हेतुत्वम् ॥ २३ ॥ अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते । क्षित्यादीनां
नवानां तु द्रव्यत्वं गुणयोगिता ॥ २४ ॥ क्षितिर्जलं तथा तेजः पवनो मन एव च
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥ कालखात्मदिशां सर्वगतत्वं परमं

महत् । क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥ २६ ॥ द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् । अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥ २७ ॥ रूपद्रवत्वप्रत्यक्षयोगिनः प्रथमास्त्रयः । गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८ ॥ आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः । यदुक्तं यस्य साधर्म्यं वैधर्म्य-मितरस्य तत् ॥ २९ ॥ स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः । स्पर्शाद्यष्टौ रूपवेगौ द्रवत्वं तेजसो गुणाः ॥ ३० ॥ स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम् । रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१ ॥ स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश । बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा ॥ ३२ ॥ धर्माधर्मौ गुणा एत आत्मनः स्युश्चतुर्दश । संख्यादिपंचकं कालदिशोः शब्दश्च ते च खे ॥ ३३ ॥ संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे । परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४ ॥ तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता । षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५ ॥ स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः । नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६ ॥ अनित्या तु तदन्या स्यात्सैवावयवयोगिनी । सा च त्रिधा भवेद्देहमिन्द्रियं विषयस्तथा ॥३७॥ योनिजादि भवेद्देहमिन्द्रियं घ्राणलक्षणम् । विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥ ३८ ॥ वर्णः शुक्लो रसस्पर्शौ जले मधुरशीतलौ । स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥ ३९ ॥ नित्यतादि प्रथमवत्किं तु देहमयोनिजम् । इन्द्रियं रसनं सिन्धुहिमादिर्विषयो मतः ॥ ४० ॥ उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम् । नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥ ४१ ॥ इन्द्रियं नयनं वह्निस्वर्णादिर्विषयो मतः । अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥४२॥ तिर्यग्गमनवानेष ज्ञेयः स्पर्शादिलिङ्गकः । पूर्ववन्नित्यताद्युक्तं देहव्यापि त्वगिन्द्रियम् ॥४३॥ प्राणादिस्तु महावायुपर्यन्तो विषयो मतः । आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥ ४४ ॥ इन्द्रियं च भवेच्छ्रोत्रमेकः सन्नप्युपाधितः । जन्यानां जनकः कालो जगतामाश्रयो मतः ॥ ४५ ॥ परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः । दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥ ४६॥ उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् । आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥ ४७ ॥ शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः। तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥ ४८ ॥ मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् । धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥ ४९ ॥ प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः । अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥ ५० ॥ विभुर्बुद्ध्यादिगुणवान्बुद्धिस्तु द्विविधा मता । अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥ ५१ ॥ प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे । घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥ ५२ ॥ घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः । तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥ ५३ ॥ उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये । विभागसंयोगपरापरत्वस्नेहद्रवत्वं

परिमाणयुक्तम् ॥ ५४ ॥ क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः । गृह्णाति चक्षुः संबन्धादालोकोद्भूतरूपयोः ॥ ५५ ॥ उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः । रूपान्यचक्षुषो योग्यं रूपमत्रापि कारणम् ॥ ५६ ॥ द्रव्याध्यक्षं त्वचो योगो मनसा ज्ञानकारणम् । मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥५७॥ ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते । महत्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥ विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः । द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः ॥ ५९ ॥ द्रव्येषु समवेतानां तथा तत्समवायतः । तत्रापि समवेतानां शब्दस्य समवायतः ॥ ६० ॥ तद्वृत्तीनां समवेतसमवायेन तु ग्रहः । विशेषणतया तद्वदभावानां ग्रहो भवेत् ॥ ६१ ॥ यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते । प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥ ६२ ॥ अलौकिकः संनिकर्षस्त्रिविधः परिकीर्तितः । सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा ॥ ६३ ॥ आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते । तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥ विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः । योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६६ ॥ युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः । व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥ अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि । अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥ व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते । व्याप्तिः साध्यवदन्यस्मिन्नसंबन्ध उदाहृतः ॥ ६८ ॥ अथवा हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥ ६९ ॥ सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते । सपक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥ अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः । कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥ आद्यः साधारणस्तु स्यादसाधारणकोऽपरः । तथैवानुपसंहारी त्रिधाऽनैकान्तिको भवेत् ॥ ७२ ॥ यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः । यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः ॥ ७३ ॥ तथैवानुपसंहारी केवलान्वयिपक्षकः । यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥ आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ । व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥ पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः । ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥ व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् । विरुद्धयोः परामर्शो हेत्वोः सत्प्रतिपक्षता ॥७७॥ साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः । उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥ ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् । सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥ वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते । गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥ ८० ॥ पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥८१॥ लक्षणा शक्यसंबन्धस्तात्पर्यानुपपत्तितः । आसत्तियोग्यताकाङ्क्षा तात्पर्यज्ञानमिष्यते ॥ ८२ ॥ कारणं संनिधानं तु पदस्यासत्तिरुच्यते । पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥ ८३ ॥ यत्पदेन विना

यस्यानवुभावकता भवेत् । आकाङ्क्षा वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥८४॥ साक्षात्कारे सुखादीनां करणं मन उच्यते ॥ अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥ ८५ ॥ अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः । रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥ ८६ ॥ द्रवत्वं स्नेहवेगाश्च मता मूर्तगुणा अमी । धर्माधर्मौ भावना च शब्दोबुद्ध्यादयोऽपि च ॥ ८७ ॥ एतेऽमूर्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः । संख्यादयो विभागान्ता उभयेषां गुणा मताः ॥ ८८ ॥ संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा । द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥ ८९ ॥ अतः शेषगुणाः सर्वे मता एकैकवृत्तयः । बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः ॥ ९० ॥ अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः । संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥ ९१ ॥ गुरुत्ववेगौ सामान्यगुणा एते प्रकीर्तिताः । संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥ ९२ ॥ एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः । बाह्यैकैकेन्द्रियग्राह्या गुरुत्वादृष्टभावनाः॥९३॥ अतीन्द्रिया विभूनां तु ये स्युर्वैशेषिका गुणाः । अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥ ९४ ॥ आपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम् । स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥९५॥ स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः । संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥९६॥ स्पर्शान्तपरिमाणैकपृथक्त्वस्नेहशब्दके । भवेदसमवायित्वमथ वैशेषिके गुणे ॥ ९७ ॥ आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः । वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥ ९८ ॥ द्विधैव कारणत्वं स्यादथ प्रादेशिको भवेत् । वैशेषिको विभुगुणः संयोगादिद्वयं तथा ॥ ९९ ॥ चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् । चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥१००॥ जलादिपरमाणौ तन्नित्यमन्यत्सहेतुकम् । रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥१०१॥ सहकारी रसज्ञाया नित्यतादि च पूर्ववत् । घ्राणग्राह्यो भवेद्गन्धो घ्राणस्यैवोपकारकः ॥ १०२ ॥ सौरभश्चासौरभश्च स द्वेधा परिकीर्तितः । स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥ १०३ ॥ अनुष्णाशीतशीतोष्णभेदात्स त्रिविधो मतः । काठिन्यादिक्षितावेव नित्यतादि च पूर्ववत् ॥ १०४ ॥ एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् । तत्रापि परमाणौ स्यात्पाको वैशेषिके नये ॥ १०५ ॥ नैयायिकानां तु नये द्व्यणुकादावपीष्यते । गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥ १०६ ॥ नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते । द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥ १०७ ॥ अनेकाश्रयपर्याप्ता एते तु परिकीर्तिताः । अपेक्षाबुद्धिनाशाच्च तेषां नाशो निरूपितः ॥ १०८ ॥ अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते । परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥ १०९ ॥ अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः । अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ ११० ॥ संख्यातः परिमाणाच्च प्रचयादपि जायते । अनित्यं द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥ १११ ॥ परिमाणं घटादौ तु परिमाणजमुच्यते । प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥ ११२ ॥ परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः ।

संख्यावत्तु पृथक्त्वं स्यात्पृथक्प्रत्ययकारणम् ॥ ११३ ॥ अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते । अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥ ११४ ॥ अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः । कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥ ११५ ॥ तथोभयक्रियाजन्यो भवेत्संयोगजोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्तितः ॥ ११६ ॥ मेषयोः संनिपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात्संयोगस्तरुकुम्भयोः ॥ ११७ ॥ तृतीयः स्यात्कर्मजोऽपि द्विधैव परिकीर्तितः । अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥ ११८ ॥ शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् । एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥ ११९ ॥ विभागजस्तृतीयः स्यात्तृतीयोऽपि द्विधा भवेत् । हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः ॥ १२० ॥ परत्वं चापरत्वं च द्विविधं परिकीर्तितम् । दैशिकं कालिकं चापि मूर्त एव तु दैशिकम् ॥ १२१ ॥ परत्वं मूर्तसंयोगभूयस्त्वज्ञानतो भवेत् । अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥ १२२ ॥ तयोरसमवायी तु दिक्संयोगस्तदाश्रये । दिवाकरपरिस्पन्दभूयस्त्वज्ञानतो भवेत् ॥ १२३ ॥ परत्वमपरत्वं तु तदीयाल्पत्वबुद्धितः । अत्र त्वसमवायी स्यात्संयोगः कालपिण्डयोः ॥ १२४ ॥ अपेक्षाबुद्धिनाशेन नाशस्तेषां निरूपितः । बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥ १२५ ॥ अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते । अप्रमा च प्रमा चेति द्विविधं ज्ञानमिष्यते ॥ १२६ ॥ तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता । तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्तितः ॥ १२७ ॥ आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीतता मतिः । भवेन्निश्चयरूपा या संशयोऽथ प्रदर्श्यते ॥ १२८ ॥ किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः । तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥ १२९ ॥ स संशयो मतिर्या स्यादेकत्राभावभावयोः । साधारणादिधर्मस्य ज्ञानं संशयकारणम् ॥ १३० ॥ दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् । पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ १३१ ॥ प्रत्यक्षे तु विशेष्येण विशेषणवता समम् । संनिकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥ १३२ ॥ पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् । शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥ १३३ ॥ शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा । गुणः स्याद्भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥ १३४ ॥ अथवा तत्प्रकारं यज्ज्ञानं तद्वद्विशेष्यकम् । तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥ १३५ ॥ प्रकारतादिशून्यं हि संबन्धानवगाहि तत् । प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥ १३६ ॥ व्यभिचारस्याग्रहोऽपि सहचारग्रहस्तथा । हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्तकः ॥ १३७ ॥ साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा । स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते ॥ १३८ ॥ सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः । हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥ १३९ ॥ व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् । शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते ॥ १४० ॥ अनुमानगतार्थत्वादिति वैशेषिकं मतम् । तत्र सम्यग्विना व्याप्तिबोधं शब्दादि-

बोधतः ॥ १४१ ॥ त्रैविध्यमनुमानस्य केवलान्वयिभेदतः । द्वैविध्यं तु भवेद्व्याप्तेरन्वयव्यतिरेकतः ॥ १४२ ॥ अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते । साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥ १४३ ॥ अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते । व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥ सुखं तु जगतामेव काम्यं धर्मेण जायते । अधर्मजन्यं दुःखं स्यात्प्रतिकूलं सचेतसाम् ॥ १४५ ॥ निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥ १४६ ॥ चिकीर्षाकृतिसाध्यत्वप्रकारेच्छा च या भवेत् । तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥ बलवद्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका । तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥ १४८ ॥ द्विष्टसाधनताज्ञानं भवेद्द्वेषस्य कारणम् । प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥ १४९ ॥ एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम् । चिकीर्षाकृतिसाध्येष्टसाधनत्वमतिस्तथा ॥ १५० ॥ उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् । निवृत्तिस्तु भवेद्द्वेषाद्विष्टसाधनता धियः ॥ १५१ ॥ यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् । शरीरे प्राणसंचारे कारणं परिकीर्तितम् ॥ १५२ ॥ अतीन्द्रियं गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् । अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ १५३ ॥ तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि । सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥ १५४ ॥ सांसिद्धिकं तु सलिले द्वितीयं क्षितितेजसोः । परमाणुजले नित्यमन्यत्रानित्यमुच्यते ॥ १५५ ॥ नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु । द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥ १५६ ॥ स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ । तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूलता ॥ १५७ ॥ संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने । मूर्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् ॥ १५८ ॥ स्थितिस्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि । अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् ॥ १५९ ॥ भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥ १६० ॥ स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते । धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिसाधनम् ॥ १६१ ॥ गङ्गास्नानादियागादिव्यापारः स तु कीर्तितः । कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥ १६२ ॥ अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः । प्रायश्चित्तादिनाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥ १६३ ॥ इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः । शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥ १६४ ॥ कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः । सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥ १६५ ॥ वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता । कदम्बगोलकन्यायादुत्पत्तिः कस्यचिन्मते ॥ १६६ ॥ उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता । सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥ १६७ ॥ तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् । तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥ १६८ ॥

॥ इति श्रीविश्वनाथपञ्चाननकृता कारिकावली समाप्ता ॥



॥ श्रीगणेशाय नमः ॥

# कारिकावली ।

नूतनजलधररुचये गोपवधूटीदुकूलचौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥ १ ॥

## सिद्धान्तमुक्तावली ।

चूडामणीकृतविधुर्वलयीकृतवासुकिः ।
भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥
निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरंतनोक्तिभिः ।
विशदीकरवाणि कौतुकान्ननु राजीवदयावशंवदः ॥ २ ॥
सद्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्सामान्यविशेषनित्यमिलिताभावप्रकर्षोज्ज्वला ।
विष्णोर्वक्षसि विश्वनाथकृतिना सिद्धान्तमुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ॥३॥

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति-नूतनेत्यादि । ननु[1] मङ्गलं न विघ्नध्वंसं प्रति न[2] वा समाप्तिं प्रति कारणं विनापि[3] मङ्गलं नास्तिकादीनां ग्रन्थे निर्विघ्नपरिसमा-

---

१ विघ्नविघातायेत्यादिग्रन्थेन सूचितं मङ्गलस्य विघ्नध्वंससाधनत्वमाक्षिप्य यावत्फलविशेषशून्यत्वसाधनद्वारा फलशून्यत्वं प्रसाध्य निष्फलत्वेन हेतुना मङ्गलाचरणस्यायुक्तत्वं साधयितुमाशङ्कते नन्विति । २ ये मङ्गलस्य समाप्तिसाधनत्वमभ्युपगच्छन्ति तेषामपि मते यावत्फलविशेषशून्यत्वं साधयितुमाह—न वेति । फलान्तरासाधनत्वं तु सर्वसंमतत्वान्न साधनीयम् । ३ निर्विघ्नपरिसमाप्त्यधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वरूपव्यतिरेकव्यभिचारादित्यर्थः । अत्रैव प्रसङ्गादन्वयव्यतिरेकसहचारव्यभिचारस्वरूपं प्रदर्श्यते-कारणसत्त्वे कार्यसत्त्वमन्वयसहचारः । कारणाभावे कार्याभावो व्यतिरेकसहचारः । एवं कारणसत्वे कार्याभावोऽन्वयव्यभिचारः । कारणाभावे कार्यसत्त्वं व्यतिरेकव्यभिचारः ।

१–२

प्तिदर्शनादिति चेन्न। [1]अविगीतशिष्टाचारविषयत्वेन मङ्गलस्य सफलत्वे सिद्धे तत्र च फलजिज्ञासायां संभवति दृष्टफलकत्वे अदृष्टफलकल्पनाया अन्याय्यत्वात् उपस्थितत्वाच्च समाप्तिरेव फलं [2]कल्प्यते। इत्थं च यत्र मङ्गलं न दृश्यते तत्रापि जन्मान्तरीयं तत्कल्प्यते, यत्र च सत्यपि मङ्गले समाप्तिर्न दृश्यते तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यं, प्रचुरस्यास्यैव बलवत्तरविघ्ननिराकरणकारणत्वं, विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः। नव्यास्तु मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु [3]बुद्धिप्रतिभादिकारणकलापात्। नच स्वतःसिद्धविघ्नविरहवता कृतस्य मङ्गलस्य निष्फलत्वापत्तिरिति वाच्यम्। इष्टापत्तेः, विघ्नशङ्कया तदाचरणात्। तथैव शिष्टाचारात्। नच तस्य निष्फलत्वे तद्बोधकवेद[4]प्रामाण्यापत्तिरिति वाच्यं, सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्। मङ्गलं तु विघ्नध्वंसविशेषे कारणं विघ्नध्वंसविशेषे च विनायकस्तवपाठादि। क्वचिच्च विघ्नात्यन्ताभाव एव समाप्तिसाधनं प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात्। इत्थं च नास्तिकादीनां ग्रन्थेषु जन्मान्तरीयमङ्गलजन्यदुरितध्वंसः, स्वतःसिद्धविघ्नात्यन्ताभावो वास्तीति न व्यभिचार इत्याहुः॥ संसारेति। संसार एव महीरुहो वृक्षस्तस्य बीजाय। एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथाहि। यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यत-

---

१ मङ्गलं सफलम्—अविगीतशिष्टाचारविषयत्वात्—इत्यनुमानं मङ्गलस्य सफलत्वे साधकम्। २ मङ्गलं समाप्तिफलकं समाप्त्यन्याफलत्वे सति सफलकत्वात्—इतिपरिशेषानुमानं मङ्गलस्य समाप्तिसाधनत्वे मानम्। ३ बुद्धिस्तात्कालिकी ज्ञेया मतिरागामिगोचरा। प्रज्ञां नवनवोन्मेषशालिनीं प्रतिभां विदुः। ४ मङ्गलं वेदबोधितकर्तव्यताकमलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवदित्यादिनानुमितः—समाप्तिकामो मङ्गलमाचरेदिति। ५ क्षित्यङ्कुरादिकं कार्यं कर्तृजन्यं कार्यत्वात्, घटादिवत् इत्यनुमानमीश्वरसद्भावे मानम्।

स्तत्कर्तृत्वेनेश्वरसिद्धिः नच। शरीराजन्यत्वेन कर्त्रजन्यत्वसाधकेन सत्प्रतिपक्ष इति वाच्यम्, अप्रयोजकत्वात्[2]। मम[3] तु कर्तृत्वेन कार्यत्वेन कार्यकारणभाव एव अनुकूलतर्कः। "द्यावाभूमी जनयन्देव एकः" "विश्वस्य कर्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसंधेयाः ॥ १ ॥

पदार्थान्विभजते—

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।**
**समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥ २ ॥**

अत्र सप्तमस्याभावत्वकथनादेव षण्णां भावत्वं प्राप्तं तेन भावत्वेन पृथगुपन्यासो[4] न कृतः। एते च पदार्था वैशेषिके प्रसिद्धा नैयायिकानामप्यविरुद्धाः। प्रतिपादितं चैवमेव भाष्ये[5]। अत एवोपमानचिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वमाशङ्कितम्[6]। ननु[7] कथमेते एव पदार्थाः शक्तिसादृश्यादीनामप्यतिरिक्तपदार्थत्वात्। तथाहि। मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते। तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते उत्तेजकेन मण्याद्यपसारणेन च जन्यत इति कल्प्यते। एवं सादृश्यमप्यतिरिक्तः पदार्थः। तद्धि न षट्सु भावेष्वन्तर्भवति सामान्येऽपि[8]

---

१ क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वात्, आकाशवत्। २ अप्रयोजकत्वात्। व्यभिचारशङ्कोत्थाने तन्निवर्तकाऽनुकूलतर्काभावादित्यर्थः। अर्थात् वादिप्रयोगे शरीराजन्यत्वमस्तु कर्त्रजन्यत्वं मास्तु-इत्याकारिका यदि व्यभिचारशङ्का जायते तदा तद्वारकोऽनुकूलतर्को नास्तीति। ३ सिद्धान्ते तु यदि कर्तृजन्यत्वं न स्यात्तर्हि कार्यत्वमेव न स्यादित्यनुकूलतर्कः। ४ पदार्था द्विविधा, भावरूपा अभावरूपाश्च। भावरूपाः षड्विधाः, अभावरूपाश्चतुर्विधा इत्येवं पृथगुपन्यासो न कृतः। एवंप्रकारोपन्यासस्तु न्यायसारे स्पष्टः। ५ कणादमुनिकृतसूत्राणां भाष्ये। ६ प्रभाकरमते। ७ ग्रन्थमुपपादयति नन्विति। ८ द्रव्यादिषड्भावपदार्थेषु नास्ति कश्चित्तादृशः पदार्थो यः सामान्येतरेषु वर्तमानः सन् सामान्येऽपि वर्तेत। सादृश्यं तु भवतितथेति षड्भ्योऽतिरिक्तमिति भावः।

सत्त्वात्। यथा गोत्वं नित्यं तथाश्वत्वमपीति सादृश्यप्रतीतेः। नाप्यभावे सत्त्वेन प्रतीयमानत्वादिति चेन्न, मण्याद्यभावविशिष्टवह्न्यादेर्दाहादिकं प्रति स्वातन्त्र्येण मण्यभावादेरेव वा हेतुत्वं कल्प्यते। अनेनैव सामञ्जस्ये अनन्तशक्तितत्प्रागभावध्वंसकल्पनानौचित्यात्। न चोत्तेजके सति प्रतिबन्धकसद्भावेऽपि कथं दाह इति वाच्यम्। उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वात्। सादृश्यमपि न पदार्थान्तरं किंतु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति ॥ २ ॥

द्रव्याणि विभजते—

**क्षित्यप्तेजोमरुद्व्योमकालदिग्देहिनो मनः।**
**द्रव्याणि**

क्षितिः पृथिवी, आपो जलानि, तेजो वह्निः, मरुद् वायुः, व्योम आकाशः, कालः समयः, दिगाशा, देही आत्मा, मनः, एतानि नव द्रव्याणीत्यर्थः। ननु द्रव्यत्वजातौ किं मानम्। न हि तत्र प्रत्यक्षं प्रमाणं, घृतजतुप्रभृतिषु द्रव्यत्वाग्रहादिति चेन्न। कार्यसमवायिकारणतावच्छेदकतया संयोगस्य विभागस्य वा समवा-

---

१ न केवलश्चन्द्रकान्तमणिरेव प्रतिबन्धकः किन्तु—उत्तेजकः सूर्यकान्तमणिस्तदभावविशिष्टश्चन्द्रकान्तमणिर्दाहं प्रति प्रतिबन्धकः। अपरं च, उत्तेजकाभावविशिष्टचन्द्रकान्तमणेरभावस्य दाहं प्रति कारणतास्ति। २ समवायेन कार्यत्वावच्छिन्नं प्रति या तादात्म्येन कारणता सा अवश्यमेव किंचिद्धर्मावच्छिन्नास्ति स धर्म एव द्रव्यत्वरूपा जातिरिति। अत्रानुमानप्रयोगः—समवायसंबन्धावच्छिन्न—कार्यत्वावच्छिन्न—कार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्ना या कारणता सा किंचिद्धर्मावच्छिन्ना कारणतात्वात् घटगतकार्यतानिरूपितदण्डगतकारणतावत्। अत्र कार्यत्वकुक्षौ यावत्कार्यप्रवेशेन गौरवात्, कार्यत्वस्य ध्वंसेपि सत्त्वात्तत्र च समवायसंबन्धावच्छिन्नकार्यताया अभावादतिप्रसक्तत्वेनावच्छेदकत्वासंभवाच्चाह संयोगस्येति। अनुमानप्रयोगस्तु—समवायसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नकार्यतानिरूपिता तादात्म्यसंबन्धावच्छिन्ना या कारणतेत्यादि प्राग्वत्। येषां

यिकारणतावच्छेदकतया तत्सिद्धेरिति। ननु दशमं द्रव्यं तमः कुतो नोक्तं तद्धि प्रत्यक्षेण गृह्यते, तस्य च रूपवत्त्वात् कर्मवत्त्वाच्च द्रव्यत्वं, तच्च गन्धशून्यत्वान्न पृथिवी, नीलरूपवत्त्वाच्च न जलादिकं, तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणमिति चेन्न, आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूपवत्ताप्रतीतिस्तु भ्रमरूपा। कर्मवत्ताप्रतीतिरप्यालोकापसरणौपाधिकी भ्रान्तिरेव। तमसोऽतिरिक्तत्वेऽनन्तावयवादिकल्पनागौरवं च स्यात्। स्वर्णस्य यथा तेजस्यन्तर्भावस्तथा वक्ष्यते।

गुणान्विभजते—

अथ गुणा रूपं रसो गन्धस्ततः परम्॥ ३॥
स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम्।
संयोगश्च विभागश्च परत्वं चापरत्वकम्॥ ४॥
बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नो गुरुत्वकम्।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च॥ ५॥

एते गुणाश्चतुर्विंशतिसंख्याकाः कणादेन कण्ठतः चशब्देन च दर्शिताः। तत्र गुणत्वादिकजातिसिद्धिरग्रे वक्ष्यते॥ ३–५॥

कर्माणि विभजते—

उत्क्षेपणं ततोऽपक्षेपणमाकुञ्चनं तथा।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च॥ ६॥

कर्मत्वजातिस्तु प्रत्यक्षसिद्धा। एवमुत्क्षेपणत्वादिकमपि॥ ६॥

---

मते विभुद्वयस्य संयोगस्तेषां संयोगत्वावच्छिन्ना कार्यता अप्रसिद्धा विभूनामिव तत्संयोगस्यापि नित्यतयाऽतिप्रसक्तत्वादत आह–विभागस्य वेति। समवायसंबन्धावच्छिन्नविभागत्वावच्छिन्नकार्यतानिरूपिता तादात्म्यसंबन्धावच्छिन्ना या कारणतेत्यादिप्राग्वदेवानुमानप्रयोगः।

१ प्रयत्नाश्च गुणाः–एवं सूत्रान्ते पठनात्। १७ गुणाः कण्ठरवेणोक्ताः–७ च शब्देन सूचिताः।



नन्वत्र भ्रमणादिकमपि पञ्चकर्माधिकतया कुतो नोक्तमत आह—

**भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।**
**तिर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥ ७ ॥**

सामान्यं निरूपयति—

**सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।**
**द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥ ८ ॥**

तल्लक्षणं तु नित्यत्वे सति अनेकसमवेतत्वम् । अनेकसमवेतत्वं संयोगादीनामप्यस्त्यत उक्तं नित्यत्वे सतीति । नित्यत्वे सति समवेतत्वं गगनपरिमाणादीनामप्यस्त्यत उक्तमनेकेति । नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावेऽप्यस्त्यतो वृत्तित्वसामान्यं विहाय समवेतत्वमित्युक्तम् । एकमात्रव्यक्तिवृत्तिस्तु न जातिः तथा चोक्तम्—

"व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः ।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः" ॥ १ ॥

द्रव्यादीति । परत्वमधिकदेशवृत्तित्वम्, अपरत्वमल्पदेशवृत्तित्वम्, सकलजात्यपेक्षयाऽधिकदेशवृत्तित्वात् सत्तायाः परत्वं तदपेक्षया चान्यासां जातीनामपरत्वम् ॥ ८ ॥

**परभिन्ना च या जातिः सैवापरतयोच्यते ।**
**द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥ ९ ॥**

---

१ तत्रैकव्यक्तिकत्वादाकाशत्वं न जातिः । तुल्यव्यक्तिकत्वाद्धटत्वं कलशत्वं न जातिद्वयम् । संकीर्णत्वाद्भूतत्वं मूर्तत्वं च न जातिः । अनवस्थाभयात्सामान्यत्वं न जातिः । विशेषस्य व्यावृत्तस्वभावस्य रूपहानिः स्यादतो विशेषत्वं न जातिः । समवायसंबन्धाभावात् समवायत्वमभावत्वं च न जातिः । २ परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः संकरः । यथा भूतत्वाभाववति मनसि मूर्तत्वं वर्तते मूर्तत्वाभाववति चाकाशे भूतत्वं वर्ततेऽनयोरेकत्र समावेशः पृथिव्यादिचतुष्टये । तस्मादेतद्द्वयं जातिरूपं नास्ति ।

**व्यापकत्वात्पराऽपि स्याद्व्याप्यत्वादपराऽपि च ।**

पृथिवीत्वाद्यपेक्षया व्यापकत्वादधिकदेशवृत्तित्वात् द्रव्यत्वादेः परत्वं, सत्तापेक्षया व्याप्यत्वाद् अल्पदेशवृत्तित्वाच्च द्रव्यत्वस्यापरत्वं, तथा च धर्मद्वयसमावेशादुभयमविरुद्धम् ।

विशेषं निरूपयति—

**अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥ १० ॥**

अन्ते अवसाने वर्तत इत्यन्त्यः, यदपेक्षया विशेषो नास्तीत्यर्थः । घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयवभेदात्परस्परं भेदः, परमाणूनां परस्परभेदको विशेष एव । स तु स्वत एव व्यावृत्तः, तेन तत्र विशेषान्तरापेक्षा नास्तीति भावः ॥ ९ ॥ १० ॥

समवायं दर्शयति—

**घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।**
**तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥ ११ ॥**

अवयवावयविनोर्जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोर्नित्यद्रव्यविशेषयोश्च यः संबन्धः स समवायः । समवायत्वं नित्यसंबन्धत्वम् । तत्र प्रमाणं तु गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसंबन्धविषया, विशिष्टबुद्धित्वात्, दण्डी पुरुष इति विशिष्टबुद्धिवत् इत्यनुमानम् । एतेन संयोगादिबाधात्[1]समवायसिद्धिः । न[2] च स्वरूपसंबन्धेन सिद्धसाधनम्, अर्थान्तरं वा, अनन्तस्वरूपाणां संबन्धत्वकल्पने गौरवाल्लाघवादेकसमवायसिद्धिः । न[3] च समवायस्यैकत्वे वायौ रूपवत्ताबुद्धिप्रसङ्गः, तत्र रूपसमवायसत्त्वेऽपि रूपाभावात् । न चैवमभावस्य वैशिष्ट्यं संबन्धान्तरं सिध्येदिति वाच्यम्,

---

१ संयोगस्तु द्वयोर्द्रव्यपदार्थयोरेव भवति न तु द्रव्यगुणयोरतः संयोगादीनां बाधः । २ अयुतसिद्धपदार्थानां स्वरूपसंबन्धोऽस्तीतिवादिनां मीमांसकानां मतेऽनेनानुमानेन सिद्धसाधनं जातम् । समवायसाधनार्थं प्रवृत्तानां नैयायिकानामर्थान्तरं जातम् । ३ यदि समवाय एक एवाऽस्ति तर्हि रूपसमवायस्य तथा स्पर्शसमवायस्य एकत्वात्—वायौ रूपवत्ताबुद्धेः प्रमात्वं स्यात् ।

तस्य नित्यत्वे भूतले घटानयनानन्तरमपि घटाभावबुद्धिप्रसङ्गात्। घटाभावस्य तत्र सत्त्वात्। तस्य नित्यत्वात्, अन्[1]यथा देशान्तरेऽपि तत्प्रतीतिर्न स्यात्। वैशिष्ट्यस्य च तत्र सत्त्वात्। मम[2] तु घटे पाकरक्ततादशायां श्यामरूपस्य नष्टत्वान्न तद्वत्ताबुद्धिः। वैशिष्ट्यस्यानित्यत्वे त्वनन्तवैशिष्ट्यकल्पने तवैव गौरवम्। इत्थं च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां संबन्धः॥ ११॥

अभावं विभजते—

**अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः।**
**प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च॥ १२॥**
**एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते।**

अभावत्वं द्रव्यादिषट्कान्योऽन्यो[3]ऽभाववत्त्वम्। संसर्गाभावान्योन्याभावभेदादित्यर्थः। अन्योन्याभावस्यैकविधत्वात्तद्विभागाभावात्संसर्गाभावं विभजते। प्रागभाव इति। संसर्गाभावत्वम्, अन्योन्याभावभिन्नाभावत्वम्। अन्योन्याभावत्वं तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम्। विनाश्यभावत्वं प्रागभावत्वम्। जन्याभावत्वं ध्वंसत्वम्। नित्यसंसर्गाभावत्वम्-अत्यन्ताभावत्वम्। यत्र तु भूतलादौ घटादिकमपसारितं पुनरानीतं च तत्र घटकालस्य संबन्धाघटकतया अत्यन्ताभावस्य नित्यत्वेऽपि घटकाले न घटात्यन्ताभावबुद्धिः। तत्र उत्पादविनाशशाली चतुर्थोऽयमभाव इति केचित्। अत्र ध्वंसप्रागभावयोरधिकरणे नात्यन्ताभाव इति प्राची-

---

१ अन्यथा—यदि घटाभावस्यानित्यत्वं मन्यते तदा घटशून्यदेशेऽपि घटाभावस्य प्रतीतिर्न स्यात्-कस्मात् घटाभावस्यैकत्वात्। २ ननु समवाय एक इति वादिनस्तव मते अग्निसंयोगाज्जातरक्ते घटे पूर्वस्थितस्य श्यामरूपस्य समवायोऽस्तीत्यत आह मम त्विति। ३ अत्राभावस्य लक्षणमन्योऽन्याभावघटितमस्ति—अग्रे चान्योऽन्याभावस्य लक्षणं सामान्यरूपेणाभावघटितमस्ति। एवं चेदं लक्षणमन्योऽन्याश्रयदोषदुष्टम्। तस्मात्समवाय–सामानाधिकरण्यान्यतरसंबन्धावच्छिन्नप्रतियोगिताकसत्ताभावरूपमेवाभावस्य लक्षणम्।

नमतं, श्यामघटे रक्तो नास्तीति रक्तघटे श्यामो नास्तीतिधीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावम्। नव्यास्तु तत्र विरोधे मानाभावात् ध्वंसादिकालावच्छेदेनाप्यत्यन्ताभावो वर्तते इति प्राहुः। नन्वस्तु अभावानामधिकरणात्मकत्वं लाघवादिति चेन्न, अनन्ताधिकरणात्मकत्वकल्पनापेक्षयातिरिक्तकल्पनाया एव लघीयस्त्वात्। एवं च आधाराधेयभावोऽप्युपपद्यते। एवं च तत्तच्छब्दगन्धरसाद्यभावानां प्रत्यक्षत्वमुपपद्यते। अन्यथा तत्तदधिकरणानां तत्तदिन्द्रियाणामग्राह्यत्वादप्रत्यक्षत्वं स्यात्। एतेन ज्ञानविशेषकालविशेषाद्यात्मकत्वमत्यन्ताभावस्येति प्रत्युक्तमप्रत्यक्षत्वापत्तेः।

इदानीं पदार्थानां साधर्म्यं वैधर्म्यं च वक्तुं प्रक्रमते—

**सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥ १३ ॥**

समानो धर्मो येषां ते सधर्माणः तेषां भावः साधर्म्यं समानो धर्म इति फलितार्थः। एवं विरुद्धो धर्मो येषां ते विधर्माणः तेषां भावो वैधर्म्यं, विरुद्धो धर्म इति फलितार्थः। ज्ञेयत्वं ज्ञानविषयता सा च सर्वत्रैवास्ति ईश्वरादिज्ञानविषयतायाः केवलान्वयित्वात्। एवमभिधेयत्वप्रमेयत्वादिकं बोध्यम् ॥ १२ ॥ १३ ॥

**द्रव्यादयः पञ्च भावा अनेके समवायिनः।**
**सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥ १४ ॥**

द्रव्यगुणकर्मसामान्यविशेषाणां साधर्म्यमनेकत्वं समवायित्वं च। यद्यप्यनेकत्वमभावेऽप्यस्ति तथाप्यनेकत्वे सति भावत्वं पञ्चानां साधर्म्यम्। तथा[२] चानेकभाववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः। तेन प्रत्येकं घटादावाकाशादौ च नाव्याप्तिः। समवायित्वं च समवायसंबन्धेन संबन्धित्वं न तु समवायवत्वं सामान्या-

१ एवं चेति। अभावस्यातिरिक्तत्वस्वीकारे। २ तथा चेति। अनेकभावपदार्थेषु वर्तमाना या पदार्थविभाजिका द्रव्यत्वगुणत्वादिरूपा–उपाधिस्तादृशोपाधिमत्त्वमित्यर्थः।

दावभावात् । तथा च समवेत[1]वृत्तिपदार्थविभाजकोपाधिमत्त्वमिति फलितोऽर्थः । तेन नित्यद्रव्येषु नाव्याप्तिः । **सत्तावन्त इति ।** द्रव्यगुणकर्मणां सत्तावत्त्वमित्यर्थः । आदिरिति । यद्यपि गुणक्रियाशून्यत्वमाद्यक्षणे घटादावतिव्याप्तं क्रियाशून्यत्वं च गगनादावतिव्याप्तं तथापि गुण[2]वदवृत्तिधर्मवत्त्वं कर्मवदवृत्ति पदार्थविभाजकोपाधिमत्त्वं तदर्थः । नहि घटत्वादिकं द्रव्यत्वं वा गुणवदवृत्ति कर्मवदवृत्ति वा किंतु गुणत्वादिकम् । तथा आकाशत्वादिकं तु न पदार्थविभाजकोपाधिः ॥ १४ ॥

**सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।**
**पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥ १५ ॥**

सामान्यानधिकरणत्वं सामान्यादीनामित्यर्थः । **पारिमाण्डल्येति ।** पारिमाण्डल्यमणुपरिमाणं कारणत्वं तद्भिन्नानामित्यर्थः । अणुपरिमाणं तु न कस्यापि कारणम् । तद्धि स्वाश्रयारब्धद्रव्यपरिमाणारम्भकं भवेत् तच्च न संभवति परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमान्महदारब्धस्य महत्तरत्ववदणुजन्यस्याणुतरत्वप्रसङ्गात् । एवं परममहत्परिमाणमतीन्द्रियसामान्यं विशेषाश्च बोध्याः । इदमपि योगिप्रत्यक्षे विषयस्य न कारणत्वम् । ज्ञायमानसामा[3]न्यं न प्रत्यासत्तिः । ज्ञायमानं लिङ्गं नानुमितिकरणमित्यभिप्रायेणोक्तम् । मानसप्रत्यक्षे आत्ममहत्त्वस्य कारणत्वान्महत्परिमाणं कालादेर्बोध्यम् । तस्यापि

---

१ समवेतपदार्थे वर्तमाना या पदार्थविभाजिका द्रव्यत्वगुणत्वादिरूपा उपाधिस्ताहशोपाधिमत्त्वम्। एवं च ताहशोपाधिमत्त्वस्य परमाणुषु सत्त्वान्नाव्याप्तिः। २ गुणवद् यद् द्रव्यं तत्रावर्तमानं यद् गुणत्वादिकं धर्मस्ताहशधर्मवत्त्वम् । क्रियावद् यद् द्रव्यं तत्रावर्तमाना या पदार्थविभाजकगुणत्वादिरुपाधिस्ताहशोपाधिमत्त्वमित्यर्थः । ३ अयं ग्रन्थो नवीनानां मतेऽस्ति वर्तमानकालिकं यज्ज्ञानं ताहशज्ञानविषयीभूतं सामान्यं ज्ञायमानसामान्यम् ।

न कारणत्वमित्याचार्याणामाशय इत्यन्ये । तन्न । ज्ञानातिरिक्तं प्रत्येवाकारणताया आचार्यैरुक्तत्वात् ॥ १५ ॥

ननु कारणत्वं किम्, अत आह—

**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।**
**कारणत्वं भवेत्तस्य त्रैविध्यं परिकीर्तितम् ॥ १६ ॥**
**समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।**
**एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥ १७ ॥**

तस्य कारणत्वस्य ॥ १६ ॥ १७ ॥

**यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।**
**तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् १८**

तत्रेति । समवायिकारणे आसन्नं प्रत्यासन्नं कारणं द्वितीयमसमवायिकारणमित्यर्थः । अत्र यद्यपि तुरीतन्तुसंयोगानां[1] पटासमवायिकारणत्वं स्यात् । एवं वेगादीनामभिघाताद्यसमवायिकारणत्वं स्यात् । एवं ज्ञानादिकमपीच्छाद्यसमवायिकारणं स्यात् । तथापि पटासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वं देयम्[2] । तुरीतन्तुसंयोगस्तु तुरीपटसंयोगं प्रत्यसमवायिकारणं भवत्येव । एवं वेगादिकमपि वेगस्पन्दाद्यसमवायिकारणं भवत्येवेति, तत्तत्कार्यासमवायिकारणलक्षणे[3] तत्तद्भिन्नत्वं देयम् ।

---

१ अर्थात्—तुरीतन्तुसंयोगोऽपि, अनुयोगित्वेन तन्तुसमवेतोऽस्ति—एवं पटरूपकार्यस्य जनकोऽप्यस्ति तथा चोक्तलक्षणस्य तत्र सत्त्वादतिव्याप्तिरिति भावः । २ ननु तुरीतन्तुसंयोगस्य पटं प्रति असमवायिकारणत्वे को दोष इति चेन्न । असमवायिकारणनाशात् कार्यनाश इति नैयायिकानां सिद्धान्तात्, यदि तुरीतन्तुसंयोगोऽपि पटस्यासमवायिकारणं स्यात्तदा तन्नाशे पटनाशः स्यात्तत्तु लोके न दृश्यते । ३ अर्थात्—पटस्यासमवायिकारणलक्षणे तुरीतन्तुसंयोगभिन्नत्वे सतीति निवेशनीयम् । एवं घटस्यासमवायिकारणलक्षणे चक्रकपालसंयोगभिन्नत्वे सतीति निवेशनीयम् ।

आत्मविशेषगुणानां तु कुत्राप्यसमवायिकारणत्वं नास्ति तेन तद्भिन्नत्वं सामान्यलक्षणे देयमेव। अत्र समवायिकारणे प्रत्यासन्नं द्विविधं कार्यैकार्थप्रत्यासत्त्या कारणैकार्थप्रत्यासत्त्या च। आद्यं यथा। घटादिकं प्रति कपालसंयोगादिकमसमवायिकारणम्। तत्र कार्येण घटेन सह कारणस्य कपालसंयोगस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। द्वितीयं यथा। घटरूपं प्रति कपालरूपमसमवायिकारणम्। तत्र स्वगतरूपादिकं प्रति समवायिकारणं घटः, तेन सह कपालरूपस्यैकस्मिन्कपाले प्रत्यासत्तिरस्ति। तथा च क्वचित्समवायसंबन्धेन क्वचित्स्वसमवायिसमवायसंबन्धेनेति फलितोऽर्थः। इत्थं च कार्यैकार्थकारणैकार्थान्यतरप्रत्यासत्त्या समवायिकारणे प्रत्यासन्नं कारणं ज्ञानादिभिन्नमसमवायिकारणमिति सामान्यलक्षणं पर्यवसन्नम्। आभ्यां समवायिकारणासमवायिकारणाभ्यां परं भिन्नं कारणं तृतीयं निमित्तकारणमित्यर्थः॥ १८॥

इदानीमन्यथासिद्धत्वमेव कियतां पदार्थानामत आह—

**येन सह पूर्वभावः कारणमादाय वा यस्य।**
**अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम्॥१९॥**
**जनकं प्रति पूर्ववृत्तितामपरिज्ञाय न यस्य गृह्यते।**
**अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः २०**

यत्कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत्कार्यं प्रति तद्रूपमन्यथासिद्धमित्यर्थः। यथा घटं प्रति दण्डत्वमिति। द्वितीयमन्यथा सिद्धमाह। कारणमिति। यस्य स्वातन्त्र्येणान्वयव्यतिरेकौ न स्तः, किं तु कारणमादायैवान्वयव्यतिरेकौ गृह्येते तदन्यथासिद्धम्।

---

१ यथा घटं प्रति कपालसंयोगः समवायसंबन्धेन असमवायिकारणमस्ति।
२ यथा घटरूपं प्रति कपालरूपं स्वसमवायिसमवेतत्वसंबन्धेन कारणमस्ति। स्वं कपालरूपं तत्समवायि कपालं तत्र समवेतो घटः।

यथा दण्डरूपम्। तृतीयमाह। अन्यं प्रतीति। अन्यं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम्। यथा घटादिकं प्रत्याकाशस्य। तस्य हि घटादिकं प्रति कारणत्वमाकाशत्वेनैव स्यात्। आकाशत्वं हि शब्दसमवायिकारणत्वम्। एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्वैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम्। ननु शब्दाश्रयत्वेन तस्य कारणत्वे काऽन्यथासिद्धिरिति चेत्, पञ्चमीति गृहाण। नन्वाकाशस्य शब्दं प्रति जनकत्वे किमवच्छेदकमिति चेत्कवत्त्वादिकं विशेषपदार्थो वेति। चतुर्थमन्यथासिद्धमाह। जनकं प्रतीति। यत्कार्यजनकं प्रति पूर्ववृत्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववृत्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम्। यथा कुलालपितुर्घटं प्रति। तस्य हि कुलालपितृत्वेन घटं प्रति जनकत्वे एवान्यथासिद्धिः। कुलालत्वेन जनकत्वे त्विष्टापत्तिः, कुलालमात्रस्य घटं प्रति जनकत्वात्। पञ्चममन्यथासिद्धमाह। अतिरिक्तमिति। अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसंभवे तद्भिन्नमन्यथासिद्धमित्यर्थः। अत एव प्रत्यक्षे महत्त्वं कारणम्। अनेकद्रव्यवत्त्वमन्यथासिद्धम्। तत्र हि महत्त्वमवश्यं क्लृप्तं तेनानेकद्रव्यवत्त्वमन्यथासिद्धम्। नच वैपरीत्ये किं विनिगमकमिति वाच्यम्, महत्त्वत्वजातेः कारणतावच्छेदकत्वे लाघवात्॥ १९॥ २०॥

**एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम्।**
**घटादौ दण्डरूपादि द्वितीयमपि दर्शितम्॥ २१॥**
**तृतीयं तु भवेद्व्योम कुलालजनकोऽपरः।**
**पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ॥ २२॥**

रासभादिरिति। यद्यपि यत्किंचिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववर्तित्वमस्ति, तथापि घटजातीयं प्रति सिद्धकारणभावैर्दण्डादिभिरेव तद्व्यक्तेरपि संभवे रासभोऽन्यथासिद्ध इति

भावः । एतेष्विति । एतेषु पञ्चस्वन्यथासिद्धेषु मध्ये पञ्चमोऽन्यथासिद्ध आवश्यकः, तेनैव परेषां चरितार्थत्वात् । तथाहि । दण्डादिभिरवश्यक्लृप्तनियतपूर्ववर्तिभिरेव कार्यसंभवे दण्डत्वादिकमन्यथासिद्धम् । न[1] च वैपरीत्ये किं विनिगमकमिति वाच्यम्, दण्डत्वस्य कारणत्वे दण्डघटितपरम्परायाः संबन्धत्वकल्पने गौरवात् । एवमन्येषामप्यनेनैव चरितार्थत्वं संभवतीति ॥ २१ ॥ २२ ॥

**समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।**
**गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥२३॥**

गुणकर्मेति । असमवायिकारणत्वं गुणकर्मभिन्नानां वैधर्म्य न तु गुणकर्मणोः साधर्म्यमित्यत्र[2] तात्पर्यम् । अथवा असमवायिकारणवृत्तिसत्ताभिन्नजातिमत्त्वं[3] तदर्थः । तेन ज्ञानादीनामसमवायिकारणत्वविरहेऽपि न क्षतिः ॥ २३ ॥

**अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।**

नित्यद्रव्याणि परमाण्वाकाशादीनि[4] विहायाश्रितत्वं साधर्म्यमित्यर्थः । आश्रितत्वं तु समवायादिसंबन्धेन वृत्तिमत्त्वम् । विशेषणतया नित्यानामपि कालादौ वृत्तेः ।

इदानीं द्रव्यस्यैव विशिष्य साधर्म्यं वक्तुमारभते—

**क्षित्यादीनां नवानां तु द्रव्यत्वगुणयोगिता ॥ २४ ॥**

---

१ नचेति । घटरूपकार्यं प्रति दण्डत्वस्य कारणत्वं स्वीक्रियते दण्डोऽन्यथासिद्ध इति शङ्का । समाधानम्—यदि दण्डत्वस्य कारणता मन्यते तदा स्वाश्रयजन्यभ्रमिवत्तासंबन्धेन कारणता स्वीकर्तव्या—दण्डस्य केवलं स्वजन्यभ्रमिवत्तासंबन्धेन कारणत्वमस्ति—एवं च प्रथमसंबन्धे दण्डघटितपरंपरारूपसंबन्धकल्पने गौरवम् । २ अन्यथात्मविशेषगुणेष्वव्याप्तिः । ३ गुणत्वकर्मत्वजातिरूपमित्यर्थः । ४ पृथ्व्यादिचतुर्णां परमाणवः आकाशादिपञ्चकमेतानि नित्यद्रव्याणि ।

**क्षितिर्जलं तथा तेजः पवनो मन एव च।**
**परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥ २५ ॥**

पृथिव्यप्तेजोवायुमनसां परत्वापरत्ववत्त्वं मूर्तत्वं क्रियावत्त्वं वेगवत्त्वं च साधर्म्यम्। नच यत्र घटादौ परत्वमपरत्वं वा नोत्पन्नं तत्राव्याप्तिरिति वाच्यं, परत्वादिसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। मूर्तत्वमपकृष्टपरिमाणवत्त्वम्, तच्च तेषामेव, गगनादिपरिमाणस्य कुतोऽप्यपकृष्टत्वाभावात्। पूर्ववत् कर्मवत्त्वं कर्मसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं, वेगवत्त्वं वेगवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं च बोध्यम् ॥ २४ ॥ २५ ॥

**कालखात्मदिशां सर्वगतत्वं परमं महत्।**
**क्षित्यादिपञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥२६॥**

कालाकाशात्मदिशां सर्वगतत्वं सर्वमूर्तसंयोगित्वं परममहत्त्वं च। परममहत्त्वत्वं जातिविशेषः, अपकर्षानाश्रयपरिमाणत्वं वा। क्षित्यादीति। पृथिव्यप्तेजोवाय्वाकाशानां भूतत्वम्। तच्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। अत्र ग्राह्यत्वं लौकिकप्रत्यक्षस्वरूपयोग्यत्वं बोध्यम्। तेन ज्ञातो घट इत्यादिप्रत्यक्षे ज्ञानस्याप्युपनीतभानविषयत्वात्तद्वति आत्मनि नातिव्याप्तिः। नवा प्रत्यक्षाविषयरूपादिमति

---

१ पृथ्वी, जलं, तेजः, वायुः, मनः, एतेषां पञ्चानां परापरत्वरूपं मूर्तत्वरूपं तथा क्रियावेगाश्रयत्वरूपं साधर्म्यं समानो धर्म इति। २ उत्पन्नविनष्टादिकार्येषु। ३ क्षित्यादीनां पञ्चानां भूतत्वं साधर्म्यं क्षित्यादीनां चतुर्णां समवायेन स्पर्शवत्त्वं साधर्म्यमिति भावः। ४ मूर्तद्रव्येषु अवर्तमानं यत्परिमाणं तादृशपरिमाणवत्त्वं चतुर्णां साधर्म्यमिति भावः। ५ ज्ञातो घट इति ज्ञाने प्रकारीभूतं यज्ज्ञानं तस्यापि चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वसंबन्धेन घटांशे प्रत्यक्षं जायते तादृशज्ञानवत्यात्मन्यतिव्याप्तिः। तथाप्युक्तविशेषलौकिकप्रत्यक्षेत्यादिकथने नातिव्याप्तिः। वक्ष्यमाणसंयोगादिषड्विधसन्निकर्षेण लौकिकप्रत्यक्षं जायते। तद्भिन्नयावत्संबन्धेन प्रत्यक्षयोग्यपदार्थानामलौकिकं प्रत्यक्षं जायते। एवं च ज्ञातो घट इति ज्ञानमनुव्यवसायरूपं मानसिकमस्ति।

मात्मापि मनोग्राह्यः किंतु मनोमात्रस्य गोचर इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ॥ ५७ ॥

**ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते।**
**महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥ ५८ ॥**

चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न संभवति पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथाच प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते। तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथाहि। वैशिष्ट्यानवगाहिज्ञानस्य प्रत्यक्षं न भवति घटमहं जानामीति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते। ज्ञाने घटस्तत्र घटत्वम्। यः प्रकारः स एव विशेषणमित्युच्यते। विशेषणे यद्विशेषणं तद्विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदकप्रकारकं ज्ञानं विशिष्टवैशिष्ट्यज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्टघटादिवैशिष्ट्यभानं ज्ञाने न संभवति। घटत्वाद्यप्रकारकं च घटादिविशिष्टज्ञानं न संभवति, जात्यखण्डोपाध्यतिरिक्तपदार्थज्ञानस्य किंचिद्धर्मप्रकारकत्वनियमात्। महत्त्वमिति। द्रव्यप्रत्यक्षे महत्त्वं समवायसंबन्धेन कारणम्। द्रव्यसमवेतानां गुणकर्मसामान्यानां प्रत्यक्षे स्वाश्रयसमवायसंबन्धेन कारणं। द्रव्यसमवेतसमवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसंबन्धेन कारणमिति। इन्द्रियमिति। अत्रापि षड्विध इत्यनुषज्यते। इन्द्रियत्वं तु न जातिः पृथिवीत्वादिना सांकर्यप्रसङ्गात्। शब्देतरोद्भूतविशेष-

---

१ इमे घटघटत्वे–इति वैशिष्ट्यानवगाहि ज्ञानं जायते। २ अनुव्यवसायेन प्रत्यक्षत्वात्। ३ प्रतियोगित्वानुयोगित्वाद्यनिर्वचनीयधर्मस्य नाम–अखण्डोपाधिः। ४ स्वशब्देन महत्त्वपरिमाणं गृह्यते तदाश्रयं द्रव्यम्। ५ किंतूपाधिः। ६ पृथ्वीत्वरूपं धर्मं त्यक्त्वा–इन्द्रियत्वरूपो धर्मो नेत्रादिषु वर्तते इन्द्रियत्वरूपं धर्मं त्यक्त्वा पृथ्वीत्वरूपो धर्मो घटादिषु वर्तते अनयोरेकत्र घ्राणेन्द्रिये समावेशः।

गुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वम्। आत्मादिवारणाय सत्यन्तम्। उद्भूतविशेषगुणस्य शब्दस्य श्रोत्रे सत्त्वाच्छब्देतरेति। विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वादुद्भूतेति। उद्भूतत्वं न जातिः शुक्लत्वादिना सांकर्यात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपवत्त्वादिना चाक्षुषादौ जनकतानुपपत्तेः। किंतु शुक्लत्वादिव्याप्यं नानैवानुद्भूतत्वं तदभावकूटश्चोद्भूतत्वम्। तच्च संयोगादावप्यस्ति तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादेरप्यस्त्यतो विशेषेति। कालादिवारणाय विशेष्यदलम्। इन्द्रियावयवविषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयववारणाय नवीनमते कालादौ रूपाभावप्रत्यक्षे संनिकर्षघटकतया कारणीभूतचक्षुःसंयोगाश्रयस्य कालादेश्च वारणाय मनःपदम्। ज्ञानकारणमित्यपि तद्वारणाय। करणमिति। असाधारणं कारणं करणम्। असाधारणत्वं व्यापारवत्त्वम्॥ ५८॥

विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः।
द्रव्यग्रहस्तु संयोगात्संयुक्तसमवायतः॥ ५९॥
द्रव्येषु समवेतानां तथा तत्समवायतः।
तत्रापि समवेतानां शब्दस्य समवायतः॥ ६०॥
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः।
प्रत्यक्षं समवायस्य विशेषणतया भवेत्॥ ६१॥
विशेषणतया तद्वदभावानां ग्रहो भवेत्।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते॥ ६२॥

---

१ शुक्लत्वरूपं धर्मं त्यक्त्वा–उद्भूतत्वमुद्भूतगन्धे वर्तते। एवमुद्भूतत्वं धर्मं त्यक्त्वा शुक्लत्वधर्मः–अनुद्भूतशुक्ले वर्तते। द्वयोः समावेश उद्भूतशुक्ले। २ ज्ञानकारणमनःसंयोगाश्रयमिति।

व्यापारः संनिकर्षः । षड्विधं संनिकर्षमुदाहरणद्वारा दर्शयति । द्रव्यग्रह इति । द्रव्यप्रत्यक्षमिन्द्रियसंयोगजन्यम् । द्रव्यसमवेतप्रत्यक्षमिन्द्रियसंयुक्तसमवायजन्यम् । एवमग्रेऽपि । वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणं । द्रव्यसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणं । द्रव्यसमवेतसमवेतचाक्षुषं प्रति चक्षुःसंयुक्तसमवेतसमवायः । एवमन्यत्रापि विशिष्यैव कार्यकारणभावः । परंतु पृथिवीपरमाणुनीले नीलत्वं पृथिवीत्वं च चक्षुषा कथं न गृह्यते तत्र परंपरयोद्भूतरूपसंबन्धस्य महत्त्वसंबन्धस्य च सत्त्वात् । तथाहि—नीलत्वं जातिरेकैव घटनीले परमाणुनीले च वर्तते । तथाच महत्त्वसंबन्धो घटनीलमादाय वर्तते । उद्भूतरूपसंबन्धस्तूभयमादायैव[1] वर्तते । एवं पृथिवीपरमाणौ पृथिवीत्वेऽपि[2] घटादिकमादाय महत्त्वसंबन्धो बोध्यः । एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात् । तस्मादुद्भूतरूपावच्छिन्नमहत्त्वावच्छिन्नचक्षुःसंयुक्तसमवायस्य द्रव्यसमवेतचाक्षुषप्रत्यक्षे तादृशचक्षुःसंयुक्तसमवेतसमवायस्य द्रव्यसमवेतसमवेतचाक्षुषे कारणत्वं वाच्यम् । इत्थं च परमाणुनीलादौ न नीलत्वादिग्रहः, परमाणौ चक्षुःसंयोगस्य महत्त्वावच्छिन्नत्वाभावात् । एवं वाय्वादौ न सत्तादिचाक्षुषं तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात् । एवं यत्र घटस्य मध्यावच्छेदेनालोकसंयोगः चक्षुःसंयोगस्तु बाह्यावच्छेदेन तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम् । एवं द्रव्यस्पार्शनप्रत्यक्षे त्वक्संयोगः कारणं द्रव्यसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवायः, द्रव्यसमवेतसमवेतस्पार्शनप्रत्यक्षे त्वक्संयुक्तसमवेतसमवायः कारणम् । अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शावच्छिन्नत्वं च पूर्ववदेव बोध्यम् । एवं गन्धप्रत्यक्षे घ्राणसंयुक्तसमवायः । गन्धसमवेतस्य घ्राणजन्यप्रत्यक्षे

---

१ घटनीलं परमाणुनीलं चोभयमादायैव वर्तते । २ एवं पूर्वोक्तपरंपरासंबन्धेन पार्थिवपरमाणुनिष्ठपृथ्वीत्वेऽपि संबन्धः ।

घ्राणसंयुक्तसमवेतसमवायः कारणम् । एवं रसप्रत्यक्षे रसनासंयुक्तसमवायः । रससमवेतरासनप्रत्यक्षे रसनासंयुक्तसमवेतसमवायः कारणम् । शब्दप्रत्यक्षे श्रोत्रावच्छिन्नसमवायः कारणम् । शब्दसमवेतश्रावणप्रत्यक्षे श्रोत्रावच्छिन्नसमवेतसमवायः कारणम् । अत्र सर्वं प्रत्यक्षं लौकिकं बोध्यम् । वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति । एवमात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवायः, आत्मसमवेतसमवेतमानसप्रत्यक्षे मनःसंयुक्तसमवेतसमवायः कारणम् । अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसंबद्धविशेषणता हेतुः । वैशेषिकमते तु समवायो न प्रत्यक्षः । अत्र[1] यद्यपि विशेषणता नानाविधा । यथाहि भूतलादौ घटाद्यभावः संयुक्तविशेषणतया गृह्यते । संख्यादौ रूपाद्यभावः संयुक्तसमवेतविशेषणतया । संख्यात्वादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया । शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया । कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया । एवं कत्वाद्यवच्छिन्नाभावे गत्वाभावादिकं श्रोत्रावच्छिन्नविशेषणविशेषणतया । एवं घटाभावादौ पटाभावः चक्षुःसंयुक्तसंयुक्तविशेषणविशेषतया । एवमन्यदप्यूह्यम् । तथापि विशेषणतात्वरूपेणैकैव सा गण्यते । अन्यथा षोढा संन्निकर्ष इति प्राचां प्रवादो व्याहन्येतेति । यदि स्यादुपलभ्येतेति । अत्राभावप्रत्यक्षे योग्यानुपलब्धिः कारणम् । तथाहि । भूतलादौ घटादिज्ञाने जाते घटाभावादिकं न ज्ञायते । तेनाभावोपलम्भे प्रतियोग्युपलम्भाभावः कारणम् । तत्र योग्यताप्यपेक्षिता सा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तदर्थश्च प्रतियोगिनो घटादेः सत्त्वप्रसक्त्या प्रसञ्जित उपलम्भरूपः प्रतियोगी यस्य सोऽभावप्रत्यक्षे हेतुः । तथाहि । यत्रालोकसंयोगादिकं वर्तते तत्र

१ अभावनिरूपितविशेषणता नानाविधा ।



यद्यत्र घटः स्यात्तर्हि उपलभ्येतेत्यापादयितुं शक्यते। तत्र घटाभावादिप्रत्यक्षं भवति। अन्धकारे तु नापादयितुं शक्यते। तेन घटाभावादेरन्धकारे न चाक्षुषप्रत्यक्षम्, स्पार्शनप्रत्यक्षं तु भवत्येव, आलोकसंयोगं विनापि स्पार्शनप्रत्यक्षस्यापादयितुं शक्यत्वात्। गुरुत्वादिकं यदयोग्यं तदभावस्तु न प्रत्यक्षस्तत्र गुरुत्वादिप्रत्यक्षस्यापादयितुमशक्यत्वात्। वायौ रूपाभावः। पाषाणे सौरभाभावः। गुडे तिक्ताभावः। श्रोत्रे शब्दाभावः। आत्मनि सुखाभावः। एवमादयस्तत्तदिन्द्रियैर्गृह्यन्ते तत्तत्प्रत्यक्षस्यापादयितुं शक्यत्वात्। संसर्गाभावप्रत्यक्षे प्रतियोगिनो योग्यता। अन्योन्याभावप्रत्यक्षे त्वधिकरणयोग्यताऽपेक्षिता। अतः स्तम्भादौ पिशाचादिभेदोऽपि चक्षुषा गृह्यत एव॥ ५९॥ ६०॥ ६१॥ ६२॥

एवं प्रत्यक्षं लौकिकालौकिकभेदेन द्विविधम्। तत्र लौकिकप्रत्यक्षे षोढा संनिकर्षो वर्णितः। अलौकिकसंनिकर्षस्त्विदानीमुच्यते—

**अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः।**
**सामान्यलक्षणो ज्ञानलक्षणो योगजस्तथा॥ ६३॥**

व्यापारः संनिकर्षः। सामान्यलक्षण इति सामान्यं लक्षणं यस्येत्यर्थः। तत्र लक्षणपदेन यदि स्वरूपमुच्यते तदा सामान्यस्वरूपा प्रत्यासत्तिरित्यर्थो लभ्यते। तच्चेन्द्रियसंबद्धविशेष्यकज्ञाने प्रकारीभूतं बोध्यम्। तथाहि। यत्रेन्द्रियसंयुक्तो धूमादिस्तद्विशेष्यकं धूम इति ज्ञानं यत्र जातं तत्र ज्ञाने धूमत्वं प्रकारः। तत्र धूमत्वेन संनिकर्षेण धूमा इत्येवंरूपं सकलधूमविषयकं ज्ञानं जायते। अत्र यदीन्द्रियसंबद्धमित्येवोच्यते तदा धूलीपटले धूमत्वभ्रमानन्तरं सकलधूमविषयकं ज्ञानं न स्यात् तत्र धूमत्वेन सहेन्द्रियसंबन्धाभावात्। मन्मते तु इन्द्रियसंबद्धं धूलीपटलं तद्विशेष्यकं धूम इति ज्ञानम्, तत्र प्रकारीभूतं धूमत्वं प्रत्यासत्तिः। इन्द्रिय-

१ प्रत्यासत्तिः संबन्धः।



संबन्धश्च लौकिको ग्राह्यः । इदं च बहिरिन्द्रियस्थले । मानसस्थले तु ज्ञानप्रकारीभूतं सामान्यमात्रं प्रत्या[1]सत्तिः ॥ ६३ ॥

परंतु समानानां भावः सामान्यम् । तच्च क्वचिन्नित्यं धूमत्वादि, क्वचिच्चानित्यं घटादि । यत्रैको घटः संयोगेन भूतले समवायेन कपाले ज्ञातस्तदनन्तरं सर्वेषामेव तद्घटवतां भूतलादीनां कपालादीनां वा ज्ञानं भवति [2]तत्रेदं बोध्यम् । [3]परंतु सामान्यं येन संबन्धेन ज्ञायते तेन संबन्धेनाधिकरणानां प्रत्यासत्तिः । किं तु यत्र तद्घटनाशानन्तरं तद्घटवतः स्मरणं जा[4]तं तत्र सामान्यलक्षणया सर्वेषां तद्घटवतां भानं न स्यात् । सामान्यस्य तदानीमभावात् । [5]किंचेन्द्रियसंबद्धविशेष्यकं घट इति ज्ञानं यत्र जातं तत्र परदिने इन्द्रियसंबन्धं विनापि तादृशज्ञानप्रकारीभूतसामान्यस्य सत्त्वात्तादृशज्ञानं कुतो न जायते, तस्मात्सामान्यविषयकं ज्ञानं प्रत्यासत्तिर्न तु सामान्यमित्याह—

**आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।**

आसत्तिः प्रत्यासत्तिरित्यर्थः । तथाच सामान्यलक्षण इत्यत्र लक्षणशब्दस्य विषयोऽर्थः । तेन सामान्यविषयकं ज्ञानं प्रत्यासत्तिरित्यर्थो लभ्यते ।

ननु चक्षुःसंयोगादिकं विनापि सामान्यज्ञानं यत्र वर्तते तत्र सकलघटादीनां चाक्षुषादिप्रत्यक्षं स्यादत आह—

**तदिन्द्रियजतद्धर्मबोधसामग्र्यपेक्ष्यते ॥ ६४ ॥**

अस्यार्थः । यदा बहिरिन्द्रियेण सामान्यलक्षणया ज्ञानं जननीयं तदा यत्किंचिद्धर्मिणि तत्सामान्यस्य तदिन्द्रियज-

---

१ पूर्वोक्तरीत्या ज्ञानशब्देन पिशाचादिविषयकं शाब्दज्ञानमपि गृह्यते । २ एवंविधस्थले ज्ञायमानमनित्यसामान्यमेव प्रत्यासत्तिः । अतः शब्दादिना यत्किंचित्पिशाचाद्युपस्थितौ मनसः सकलपिशाचादिबोध उपपद्यते । ३ अन्यथा समवायसंबन्धेन ज्ञानप्रकारीभूतघटत्वादिसामान्यप्रत्यासत्त्या कालाकाशादिपदार्थानां ज्ञानस्याप्यापत्तिः—अलौकिकप्रत्यासत्त्या स्यात् । ४ तद्भूतलं घटवदासीत्-इत्याकारकं स्मरणं जातम् । ५ अपरमपि दूषणम् ।

न्यज्ञानस्य सामग्री अपेक्षिता। सा च सामग्री चक्षुःसंयोगालोकसंयोगादिकम्। तेनान्धकारादौ चक्षुरादिना तादृशं ज्ञानं न जायते॥ ६३॥ ६४॥

ननु ज्ञानलक्षणा प्रत्यासत्तिर्यदि ज्ञानरूपा सामान्यलक्षणापि ज्ञानरूपा तदा तयोर्भेदो न स्यादत आह—

**विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः।**

सामान्यलक्षणा प्रत्यासत्तिर्हि तदाश्रयस्य ज्ञानं जनयति। ज्ञानलक्षणा प्रत्यासत्तिस्तु यद्विषयकं ज्ञानं तस्यैव प्रत्यासत्तिरिति। अत्रायमर्थः। प्रत्यक्षे संनिकर्षं विना भानं न संभवति। तथा च सामान्यलक्षणां विना धूमत्वेन सकलधूमानां वह्नित्वेन सकलवह्नीनां च भानं कथं भवेत्तदर्थं सामान्यलक्षणा स्वीक्रियते। न च सकलवह्निधूमभानाभावे का क्षतिरिति वाच्यं, प्रत्यक्षधूमे वह्निसंबन्धस्य गृहीतत्वादन्यधूमस्य चानुपस्थितत्वाद्धूमो वह्निव्याप्यो न वेति संशयानुपपत्तेः। मन्मते तु सामान्यलक्षणया सकलधूमोपस्थितौ कालान्तरीयदेशान्तरीयधूमे वह्निव्याप्यत्वसंदेहः संभवति। न च सामान्यलक्षणास्वीकारे प्रमेयत्वेन सकलप्रमेयज्ञाने जाते सार्वज्ञ्यापत्तिरिति वाच्यं, प्रमेयत्वेन सकलप्रमेयज्ञाने जातेऽपि विशिष्य सकलपदार्थानामज्ञातत्त्वेन सार्वज्ञ्याभावात्। एवं ज्ञानलक्ष-

---

१ यस्य सौरभादेः—विषयी ज्ञानम्—तस्यैव सौरभादेः व्यापारः सन्निकर्षः ज्ञानलक्षणा प्रत्यासत्तिर्भवतीत्यर्थः। सुरभि चन्दनम्, इत्याकारकचाक्षुषज्ञाने सौरभं चन्दनं चन्दनत्वम्, एतत्त्रयं भासते। तत्र चन्दनचन्दनत्वयोर्यथाक्रमं नेत्रसंयोगेन तथा नेत्रसंयुक्तसमवायेन लौकिकप्रत्यक्षं भवति परंतु सौरभांशे तादृशसाक्षात्कारजनकसंबन्धो दुर्घटस्तस्य चक्षुर्ग्राह्यत्वाभावात् घ्राणग्राह्यत्वेपि घ्राणेन्द्रियस्यापि तदानीं संबन्धाभावात्। अतस्तद्ज्ञाननिर्वाहायालौकिकः संनिकर्षः कल्प्यते। स च पूर्वगृहीतसौरभस्य स्मरणरूपः तस्य चक्षुर्निरूपितत्वं तु—चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतत्वात्। २ घटत्वादिधर्मविशिष्टस्यैकधर्मिणो लौकिकसाक्षात्कारो जातः पश्चात्तद्धर्माश्रयीभूतानां देशान्तरीयकालान्तरीययावद्घटानां ज्ञानं सामान्यलक्षणप्रत्यासत्तिद्वारा भवति।

णाया अस्वीकारे सुरभि चन्दनमिति ज्ञाने सौरभस्य भानं कथं स्यात् । यद्यपि सामान्यलक्षणयापि सौरभभानं संभवति तथापि सौरभत्वस्य भानं ज्ञानलक्षणया । एवं यत्र धूमत्वेन धूलीपटलं ज्ञातं तत्र धूलीपटलस्यानुव्यवसाये भानं ज्ञानलक्षणया ।

**योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥ ६५ ॥**

योगाभ्यासजनितो धर्मविशेषः श्रुतिपुराणादिप्रतिपाद्य इत्यर्थः । युक्तयुञ्जानभेदत इति । युक्तयुञ्जानरूपयोगिद्वैविध्याद्धर्मस्यापि द्वैविध्यमिति भावः ॥ ६५ ॥

**युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।**

युक्तस्य तावद्योगजधर्मसहायेन मनसा आकाशपरमाण्वादिनिखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति । द्वितीयस्य चिन्ताविशेषोऽपि सहकारीति ।

इति श्रीविश्वनाथपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यां प्रत्यक्षखण्डम् ।

---

अनुमितिं व्युत्पादयति—

**व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥ ६६ ॥**
**अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि ।**

अनुमायामनुमितौ व्याप्तिज्ञानं करणम् । परामर्शो व्यापारः । तथाहि । येन पुरुषेण महानसादौ धूमे वह्नेर्व्याप्तिर्गृहीता पश्चात्स एव पुरुषः क्वचित्पर्वतादावविच्छिन्नमूलां धूमलेखां पश्यति । तदनन्तरं धूमो वह्निव्याप्य इत्येवं रूपं व्याप्तिस्मरणं भवति । पश्चाच्च वह्निव्याप्यधूमवानयमिति ज्ञानं भवति स एव परामर्श इत्युच्यते । तदनन्तरं पर्वतो वह्निमानिति ज्ञानम् । तदेवानुमितिः । अत्र प्राचीनास्तु व्याप्यत्वेन ज्ञायमानं लिङ्गमनुमितिकरणमिति वदन्ति । तद्दूषयति ज्ञायमानमिति ।

---

१ ज्ञानविषयकं ज्ञानमनुव्यवसाय इत्युच्यते ।



**अनागतादिलिङ्गेन न स्यादनुमितिस्तदा ॥ ६७ ॥**

लिङ्गस्यानुमित्यकरणत्वे युक्तिमाह—अनागतादीति । यद्यनुमितौ लिङ्गं करणं स्यात्तदाऽनागतेन विनष्टेन वा लिङ्गेन अनुमितिर्न स्यादनुमितिकरणस्य लिङ्गस्य तदानीमभावात् ॥६६॥६७॥

**व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।**

व्याप्यस्येति । [2]व्याप्तिविशिष्टस्य पक्षेण सह [3]वैशिष्ट्यावगाहिज्ञानमनुमितिजनकम् । तच्च व्याप्[4]यः पक्षे इति ज्ञानं पक्षो व्याप्यवानिति ज्ञानं वा । अनुमितिस्तु पक्षे व्याप्य इति ज्ञानात्पक्षे साध्यमित्याकारिका, पक्षो व्याप्यवानिति ज्ञानात्पक्षः साध्यवानित्याकारिका । द्विविधादपि परामर्शात्पक्षः साध्यवानित्येवानुमितिरित्यन्ये । ननु वह्निव्याप्यधूमवान्पर्वत इति ज्ञानं विनापि यत्र पर्वतो धूमवानिति प्रत्यक्षं ततो धूमो वह्निव्याप्य इति स्मरणं, तत्र ज्ञानद्वयादेवानुमितिदर्शनाद्व्याप्तिविशिष्टवैशिष्ट्यावगाहि ज्ञानं न सर्वत्र कारणं किंतु व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेनैव कारणत्वस्यावश्यकत्वात्, तत्र विशिष्टवैशिष्ट्यज्ञानकल्पने गौरवाच्चेति चेन्न, व्याप्यतावच्छेदकाज्ञानेऽपि वह्निव्याप्यवानिति ज्ञानादनुमित्युत्पत्तेर्लाघ[6]वाच्च

---

१ इयं यज्ञशाला वह्निमती भविष्यति भाविधूमात् । इयं यज्ञशाला वह्निमत्यासीत् भूतधूमात् । २ साध्यनिरूपितव्याप्तिविशिष्टहेतोरित्यर्थः । ३ स एव परामर्श इत्यर्थः । ४ तादृशपरामर्शज्ञानस्यैव विशेषणविशेष्यभावव्यत्यासेन स्वरूपद्वयमस्ति । तत्रैकं पक्षप्रकारकं व्याप्तिविशिष्टविशेष्यकं व्याप्यः पक्षे—इत्याकारकम् । द्वितीयं व्याप्तिविशिष्टप्रकारकं पक्षविशेष्यकं पक्षो व्याप्यवान्-इति । प्रथमपरामर्शेन पक्षप्रकारकं साध्यविशेष्यकं—पक्षे साध्यमिति अनुमितिज्ञानं जायते । द्वितीयेन साध्यप्रकारकं पक्षविशेष्यकं—पक्षः साध्यवान्—इत्याकारकं ज्ञानम् । ५ अयमालोको धूमो वा—इत्याकारकसन्देहस्थले व्याप्यतावच्छेदकप्रकारक—निर्णयाभावेऽपि वह्न्यभाववदवृत्तिमानयमित्याकारकज्ञानादपि अनुमितिदर्शनादव्याप्यतावच्छेदकेत्यादि व्यभिचरितमेवातः सर्वत्र कारणं वक्तुं न शक्यते । ६ लाघवाच्चेति । व्याप्यतावच्छेदकप्रकारतापेक्षया व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेन कारणतायां लाघवं तु कारणतावच्छेदककोटावच्छेदकधर्मवप्रवेशाद्बोध्यम् ।

व्याप्तिप्रकारकपक्षधर्मताज्ञानत्वेनैव हेतुत्वम्। किंच धूमवान्पर्वत इतिज्ञानादनुमित्यापत्तिः, व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानस्य सत्त्वात्। न.चे तदानीं गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानस्य हेतुत्वमिति वाच्यं, चैत्रस्य व्याप्तिग्रहे मैत्रस्य पक्षधर्मताज्ञानादनुमितिः स्यादिति। यदि तु तत्पुरुषीयगृह्यमाणव्याप्यतावच्छेदकप्रकारकं तत्पुरुषीयपक्षधर्मताज्ञानं तत्पुरुषीयानुमितौ हेतुरित्युच्यते, तदाऽनन्तकार्यकारणभावः। मन्मते तु समवायसंबन्धेन व्याप्तिप्रकारकपक्षधर्मताज्ञानं समवायसंबन्धेनानुमितिं जनयतीति नानन्तकार्यकारणभावः। यदि तु व्याप्तिप्रकारकं ज्ञानं पक्षधर्मताज्ञानं च स्वतन्त्रं कारणमित्युच्यते, तदा कार्यकारणभावद्वयं, वह्निव्याप्यो धूम आलोकवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिः स्यात्। इत्थं चै यत्र ज्ञानद्वयं तत्रापि विशिष्टज्ञानं कल्पनीयं फलमुखगौरवस्यादोषत्वात्।

---

पुनरपि मीमांसकः शंकते–' त्वयावच्छेदकस्य लाघवं दर्शितं परंतु पूर्वोक्तज्ञानद्वयम्, परामर्शश्चेति ज्ञानत्रयं त्वया स्वीकर्तव्यमिति तदपेक्षयास्मन्मते परं लाघवमस्ति' इति। तं प्रत्याह नैयायिकः किंचेति–व्याप्त्यनवगाहि "धूमवान् पर्वतः" इत्याकारकज्ञानादप्यनुमितिः स्यात्तव मते, एतादृशं ज्ञानमपि व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकपक्षधर्मताज्ञानरूपमेव।

१ नचेति। अनुमितिज्ञानाव्यवहितपूर्वकाले व्याप्यतावच्छेदकतया ज्ञातं यद्व्याप्यतावच्छेदकं तत्प्रकारकपक्षधर्मताज्ञानत्वेन हेतुतास्तु तथाच कालान्तरीयं तादृशज्ञानमादाय न दोषः। २ यदि त्विति। मीमांसक आह–व्याप्तिप्रकारकं यत्पक्षधर्मताज्ञानं तत्त्वेन पक्षधर्मताविषयकं यद्व्याप्तिप्रकारकं ज्ञानं तत्त्वेनेत्येवं विशेष्यविशेषणभावव्यत्यासेन विशिष्टज्ञानस्य कारणत्वे कार्यकारणभावद्वयं विनिगमनाविरहेण तवापि मन्तव्यमेव। नैयायिक आह–एवं कार्यकारणभावस्तु स्वीकर्त्तव्य एव परंतु तव मते "वह्निव्याप्यो धूमः" तथा "आलोकवान् पर्वतः" इति ज्ञानद्वयादप्यनुमितिः स्यात्, कस्माद् भवदुक्तरीत्या व्याप्तिप्रकारकं ज्ञानं तथा पक्षधर्मताज्ञानं कारणरूपेण विद्यमानमस्तीति। मीमांसकः–तव मतेऽपि पूर्वोक्तज्ञानद्वयेनानुमितिः कस्मान्न भवति। ३ इत्थं चेति। नैयायिकः। मम मते तु व्याप्तिप्रकारतानिरूपितहेतुप्रकारतानिरूपितपक्षनिष्ठविशेष्यताशालिज्ञानत्वेनानुमितिं प्रति हेतुता विवक्षिता। अतः "वह्निव्याप्यो धूमः"

**व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः ॥ ६८ ॥**

व्याप्यो नाम व्याप्त्याश्रयः, तत्र का व्याप्तिरित्यत आह व्याप्तिरिति । साध्यवदन्येति । वह्निमान् धूमादित्यादौ साध्यो वह्निः साध्यवान्महानसादिः तदन्यो जलह्रदादिः तदवृत्तित्वं धूमस्येति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ साध्यवदन्यस्मिंस्तप्तायःपिण्डादौ वह्नेः सत्त्वान्नातिव्याप्तिः । अत्र येन संबन्धेन साध्यं तेनैव संबन्धेन साध्यवान्बोध्यः । अन्यथा समवायसंबन्धेन वह्निमान्वह्नेरवयवस्तदन्यो महानसादिस्तत्र धूमस्य विद्यमानत्वादव्याप्तिप्रसङ्गात् । साध्यवदन्यश्च साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदवान्बोध्यः । तेन यत्किंचिद्वह्निमतो महानसादेर्भिन्ने पर्वतादौ धूमस्य सत्त्वेऽपि न क्षतिः । येन संबन्धेन हेतुता तेनैव संबन्धेन

---

" आलोकवान् पर्वतः " इत्याकारकज्ञानद्वयात्-अथवा " धूमो वह्निव्याप्यः " " धूमवान् पर्वतः " इत्याकारकज्ञानद्वयादनुमित्युत्पत्तिर्न स्यात् । एतत्स्थलद्वयेऽपि व्याप्तिप्रकारतानिरूपितधूमनिष्ठविशेष्यतायाः पर्वतनिष्ठविशेष्यतानिरूपितप्रकारतात्वाभावात् । अतो यत्र स्थले ज्ञानद्वयं भवति तत्रापि परामर्शात्मकविशिष्टज्ञानस्य कल्पनावश्यं कर्तव्या ।

१ साध्यतावच्छेदक-संबन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिकभेदाधिकरणनिरूपितवृत्तित्वाभावो व्याप्तिः । साध्यवदन्यशब्देन यावत्साध्यवत्सु स्थितो यः साध्यवत्त्वरूपो धर्मस्तद्धर्मावच्छिन्नप्रतियोगिताकभेदवान् बोध्यः । अन्यथा वह्निमान् धूमादित्यत्र पुनरप्यव्याप्तिः । यत्किंचिच्छब्देन वह्नेरधिकरणं पर्वतो वा महानसादिर्वास्ति ततो भिन्नो द्वितीयः पर्वतो गोष्ठादिर्वास्ति तत्र धूमरूपहेतोर्वृत्तित्वमस्ति वृत्तित्वाभावो नास्तीति-अव्याप्तिः । साध्यवत्त्वावच्छिन्नपदेन साध्यवत्त्वरूपधर्मावच्छिन्नसाध्यवद्यावदधिकरणानां ग्रहणेन तद्भिन्नं जलह्रदाद्येव भविष्यति तन्निरूपितवृत्तित्वाभावो धूमे वर्त्तते । २ येन संबन्धेनेति । प्रकृते येन संबन्धेन हेतुता विवक्षिता, साध्यवद्भिन्नाधिकरणेऽवृत्तित्वमपि तस्य हेतोस्तेन संबन्धेनोचितम् । अन्यथा वह्निमान् धूमादित्यत्र पुनरप्यव्याप्तिः । कस्मात्-वृत्तितायां हेतुतावच्छेदकसंबन्धानिवेशे साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणं धूमरूपहेतोरवयवोऽपि वक्तुं शक्यते तत्र धूमरूपहेतोः समवायसंबन्धेन वृत्तित्वमस्ति वृत्तित्वाभावो नास्तीत्यव्याप्तिः । यदि साध्यवद्भेदाधिकरणनिरूपितवृत्तितायां हेतुतावच्छेदकसंबन्धो निवेश्यते तदा हेतुतावच्छेदकसंबन्धः संयोगः ।

साध्यवदन्यावृत्तित्वं बोध्यम्। तेन साध्यवदन्यस्मिन्धूमावयवे धूमस्य समवायसंबन्धेन सत्त्वेऽपि न क्षतिः। साध्यवदन्यावृत्तित्वं च साध्यवदन्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावः, तेन धूमवान् वह्नेरित्यत्र साध्यवदन्यजलह्रदादिवृत्तित्वाभावेऽपि नातिव्याप्तिः। अत्र यद्यपि द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ

---

परंतु संयोगसंबन्धेन धूमरूपो हेतुर्न स्वावयवेषु तिष्ठति नच जलह्रदादिषु तिष्ठति किं तु स्वसाध्यवह्निना सह पर्वतादावेव तिष्ठतीति नाव्याप्तिः। साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणनिरूपिता या हेतुतावच्छेदकसंबन्धावच्छिन्ना वृत्तिता तादृशवृत्तित्वाभावो व्याप्तिः।

१ साध्यवदन्यावृत्तित्वं चेति। अत्र हेतोः साध्यवद्भेदाधिकरणेऽवृत्तितापि साध्यवद्भेदाधिकरणत्वावच्छिन्नेऽपेक्षितास्ति। अन्यथा साध्यवद्भेदाधिकरणं यावन्न गृह्यते तर्हि 'धूमवान् वह्नेः,' अत्रातिव्याप्तिः। साध्यवद्भिन्नो जलह्रदादिस्तत्र वह्निरूपहेतोरवृत्तित्वात्। यदि भेदाधिकरणत्वावच्छिन्ननिरूपितवृत्तित्वाभावो विवक्षितस्तदा साध्यवद्भेदाधिकरणं यथा जलह्रदस्तथा तप्तायपिण्डोऽपि भवति तत्र वह्निरूपहेतोर्वृत्तित्वमस्ति वृत्तित्वाभावो नास्तीति नातिव्याप्तिः। साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणत्वावच्छिन्ननिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभावो व्याप्तिः। २ अत्र यद्यपीति। अत्र साध्यवद्भेदाधिकरणे हेतोर्हेतुतावच्छेदकरूपेणावृत्तित्वं विवक्षितम्। अयं भावः। हेतुतावच्छेदको यो धर्मः स तु तादृशसाध्यवद्भेदाधिकरणनिरूपितवृत्तितानवच्छेदको बोध्यः। यदि नोच्यते तर्हि "इदं द्रव्यत्ववत् गुणकर्मान्यत्वविशिष्टसत्त्वात्, अत्राव्याप्तिः। गुणकर्मभेदविशिष्टसत्ता केवलं द्रव्ये तिष्ठति शुद्धसत्ता च द्रव्यगुणकर्मसु तिष्ठति तयोः विशिष्टं शुद्धान्नातिरिच्यते इति न्यायेन परस्परं भेदो वक्तुं न शक्यते तथाच साध्यवत्-द्रव्यं तत्प्रतियोगिकभेदाधिकरणं गुणकर्मादि तत्र वृत्तितास्ति विशिष्टसत्तायाः वृत्तिताभावो नास्तीति। यदि हेतुतावच्छेदकधर्मस्य साध्यवद्भेदाधिकरणनिरूपितवृत्तितानवच्छेदकत्वं विवक्ष्यते तदा नाव्याप्तिः। तथाहि। हेतुतावच्छेदकधर्मः-गुणकर्मान्यत्वविशिष्टसत्तात्वरूपः स च साध्यवद्भेदाधिकरणनिरूपितवृत्तितानवच्छेदक एवं रीत्या भवितुमर्हति यद्यपि गुणकर्मभेदविशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्-हेत्वधिकरणं गुणकर्म भवति तथापि गुणकर्मान्यत्वविशिष्टसत्तात्वेन विशिष्टसत्ता गुणकर्मसु न तिष्ठति किंतु द्रव्य एव, एवं साध्यवद्भेदाधिकरणगुणकर्मादिकेषु वृत्तिता गुणत्वकर्मत्वादिधर्माणामस्ति वृत्तितावच्छेदकं गुणत्वत्वादिरूपो धर्मः-अनवच्छेदकं गुणकर्मान्यत्वविशिष्टसत्तात्वरूपो धर्मः-एवं च नास्त्यव्याप्तिः।

विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्यात्साध्यवदन्यस्मिन्गुणादाववृत्तित्वं नास्ति। तथापि हेतुतावच्छेदकरूपेणावृत्तित्वं वाच्यम्। हेतुतावच्छेदकं तादृशवृत्तितानवच्छेदकमिति फलितोऽर्थः॥ ६८॥

ननु केवलान्वयिनि ज्ञेयत्वादौ साध्ये साध्यवदन्यस्याप्रसिद्धत्वादव्याप्तिः। किंच सत्तावान् जातेरित्यादौ साध्यवदन्यस्मिन्सामान्यादौ हेतुतावच्छेदकसंबन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिश्चात आह—

**अथवा हेतुमन्निष्ठविरहाप्रतियोगिना।**
**साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते॥ ६९॥**

हेतुमति निष्ठा वृत्तिर्यस्य स तथा विरहोऽभावः, तथा च हेत्वधिकरणवृत्तिर्योऽभावः तदप्रतियोगिना साध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिरुच्यते। अत्र यद्यपि वह्निमान् धूमादित्यादौ हेत्वधिकरणपर्वतादिवृत्त्यभावप्रतियोगित्वं तत्तद्वह्न्यादेरस्तीत्यव्याप्तिः। न च समानाधिकरणवह्निधूमयोरेव व्याप्तिरिति

---

१ साध्यतावच्छेदक-संबन्धावच्छिन्नसाध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदाधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभावो व्याप्तिः। इदं वाच्यत्ववत् ज्ञेयत्वात्, इत्यत्राव्याप्तिः। सत्तावान् जातेः, इत्यत्राप्यव्याप्तिः। साध्यवद्-द्रव्यगुणकर्म-साध्यवद्भेदाधिकरणं सामान्यविशेषादि तत्र हेतुतावच्छेदकसमवायसंबन्धेन यदि वृत्तित्वं स्यात्तदा तत्संबन्धावच्छिन्नवृत्तित्वाभावो जातिरूपहेतौ स्यात् परंतु तत्र समवायसंबन्धावच्छिन्नावृत्तिताऽप्रसिद्धा। २ उक्तलक्षणमपि "पर्वतो वह्निमान्" धूमात् इत्यत्राव्याप्तम्—हेत्वधिकरणपर्वतादौ महानसीयवह्नेरभावः—तथा महानसे चत्वरीयवह्नेरभावः—तत्र गोष्ठीयवह्नेरभावः—तदभावाप्रतियोगिवह्निरूपं साध्यं नास्ति किंतु प्रतियोग्येवातस्तत्राव्याप्तिः। ३ नचेति—मम लक्षणस्यायं भावः। तद्धेत्वधिकरणवृत्तिर्योऽत्यन्ताभावः—तदप्रतियोगि यत्तत्साध्यं तेन सह हेतोः सामानाधिकरण्यं व्याप्तिः। अर्थात् पर्वतीयधूमेन सह पर्वतीयवह्नेर्व्याप्तिः। महानसीयधूमेन महानसीयवह्नेर्व्याप्तिः। एवं च हेत्वधिकरणपर्वतादौ महानसीयादिवह्नेरभावे गृहीतेऽपि तत्प्रतियोगी महानसीयवह्निः—अप्रतियोगी पर्वतीयवह्निस्तेन सह पर्वतीयधूमस्य सामानाधिकरण्यान्नाव्याप्तिः।

वाच्यं, तत्तद्वह्न्यादेरप्युभयाभावसत्त्वादेकसत्त्वेऽपि द्वयं नास्तीति प्रतीतेः। गुणवान् द्रव्यत्वादित्यादावव्याप्तिश्च, तथापि प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वाच्यम्। ननु रूपत्वव्याप्यजातिमत्वान् पृथिवीत्वादि-

---

१ तत्तद्वह्न्यादेरपीति-तथापि वह्निमान् धूमात्, इत्यत्राव्याप्तेर्वारणं नास्ति। एकसत्त्वे द्वयं नास्ति-इति प्रतीत्या-पर्वते पर्वतीयवह्निसत्त्वेऽपि वह्निघटद्वयं नास्तीति वक्तुं शक्यते तादृशाभावस्य पर्वतीयवह्निरपि प्रतियोगी-अप्रतियोगिनः साध्यस्याभावादव्याप्तिरूपो दोषो भवति। तद्वारणाय हेत्वधिकरणवृत्त्यभावीयप्रतियोगिता व्यासज्यवृत्तिधर्मानवच्छिन्ना विवक्षिता-उभयव्यक्तिवृत्तिधर्मस्य नाम व्यासज्यवृत्तिधर्मः। प्रकृते हेत्वधिकरणे 'वह्निघटद्वयं नास्ति, इत्याकारकाभावीयप्रतियोगिता व्यासज्यवृत्तिधर्मानवच्छिन्ना नास्ति किंतु वह्निघटोभयस्मिन् स्थितो यो वह्निघटोभयत्वरूपो व्यासज्यवृत्तिधर्मस्तदवच्छिन्नास्ति। तस्माद्वह्निघटोभयस्याभावं गृहीत्वा लक्षणे दूषणदानमनुचितम्। किंतु शुद्धघटाभावं गृहीत्वा लक्षणसमन्वयः। हेत्वधिकरणवृत्तिव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकात्यन्ताभावाप्रतियोगिसाध्येन सह हेतोः सामानाधिकरण्यं व्याप्तिः।
२ गुणवान्-द्रव्यत्वादत्राव्याप्तिः। हेत्वधिकरणे रक्तघटे पीतगुणस्याभावः। पीतघटे श्वेतगुणस्याभावः। तदभावस्य प्रतियोगि गुणरूपं साध्यमप्रतियोगि नास्तीति लक्षणस्याव्याप्तिः। तद्वारणाय साध्यं हेत्वधिकरणवृत्त्यभावाप्रतियोगिरूपमपेक्षते इति नोच्यते किंतु साध्यतावच्छेदकधर्मो हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदको गृह्यते तथाच गुणवान् द्रव्यत्वादत्राव्याप्तिर्नास्ति। साध्यतावच्छेदकधर्मो गुणत्वरूपः स तु हेत्वधिकरणवृत्त्यभावीयप्रतियोगिताया अनवच्छेदक एवंरीत्या वर्तते। हेत्वधिकरणघटे गुणत्वेन गुणो नास्तीत्येवंरीत्याभावो ग्रहीतुं न शक्यते घटस्य द्रव्यत्वात् तत्र कोऽपि गुणः अवश्यमेव तिष्ठति। एवं यदि हेत्वधिकरणवृत्त्यभावो नीलगुणाभावः पीतगुणाभावो वा गृह्यते तदभावीयप्रतियोगिता नीलपीतगुणनिष्ठास्ति तत्प्रतियोगिताया अवच्छेदकधर्मो नीलगुणत्वपीतगुणत्वादिः अनवच्छेदकं साध्यतावच्छेदकं शुद्धगुणत्वमिति न दोषः। ३ ननु रूपत्वव्याप्यजातिमत्वान् पृथ्वीत्वादित्यत्राव्याप्तिः। रूपत्वव्याप्यजातिमन्तो नीलपीतादिगुणा अत्र साध्याः सन्ति-नीलपीतादिगुणेषु स्थिता नीलत्वपीतत्वादिजातयस्तत्र साध्यतावच्छेदिकाः सन्ति। एवं हेत्वधिकरणरक्तश्वेतादिगुणयुक्तघटपटादिषु सप्तविधरूपेषु मध्ये कस्याप्यभावोऽपि संभवति तादृशाभावीयप्रतियोगितावच्छेदिका एव नीलत्वपीतत्वादिजातयः अनवच्छेदिका न भवन्तीत्यव्याप्तिः। समाधानम्-अत्र रूपत्वव्याप्यजातिषु स्थितस्य तादृशजातित्वस्य

त्यादौ साध्यतावच्छेदिका रूपत्वव्याप्यजातयस्तासां च शुक्लत्वादिजातीनां नीलघटादिवृत्त्यभावप्रतियोगितावच्छेदकत्वमस्तीत्यव्याप्तिरिति चेन्न, तत्र परंपरया रूपत्वव्याप्यजातित्वस्यैव साध्यतावच्छेदकत्वात्। नहि तादृशधर्मावच्छिन्नाभावः क्वापि पृथिव्यामस्ति। रूपत्वव्याप्यजातिमान्नास्तीति बुद्ध्यापत्तेः। एवं दण्ड्यादिसाध्ये परंपरासंबद्धं दण्डत्वादिकमेव साध्यतावच्छेदकं तच्च प्रतियोगितानवच्छेदकमिति। साध्यादिभेदेन व्याप्तेर्भेदात्तादृश-

---

स्वाश्रयसमवायरूपपरंपरासंबन्धेन साध्यतावच्छेदकत्वं मन्यते। स्वशब्देनात्र रूपत्वव्याप्यजातित्वस्य ग्रहणम्। तदाश्रया रूपत्वव्याप्यनीलत्वपीतत्वादिजातयः सन्ति तासां, नीलपीतादिगुणेषु समवायः। अग्रे नीलपीतादिगुणा द्रव्येषु समवायसंबन्धेन साध्याः सन्ति। एवं रूपत्वव्याप्यजातित्वरूपो धर्मः स्वाश्रयसमवायसंबन्धेन नीलपीतादिगुणेषु स्थितः सन् साध्यतावच्छेदको भवति। एवं हेत्वधिकरणरक्तघटादिवृत्त्यभावो नीलत्वजातिमदभावः पीतत्वजातिमदभावः—तादृशाभावीयप्रतियोगिता नीलपीतादिगुणेषु—प्रतियोगिताया अवच्छेदको नीलत्वपीतत्वादिधर्मः स एव रूपत्वस्य व्याप्यजातयः—तासु सर्वासु स्थितो यो रूपत्वव्याप्यजातित्वरूपो धर्मः स एव साध्यतावच्छेदकोऽस्ति स एव धर्मस्तादृशाभावीयप्रतियोगिताया अनवच्छेदकोऽप्यस्ति। रूपत्वव्याप्यजातित्वावच्छिन्नवदभावस्य कस्यामपि पृथ्व्यामसत्वात्।

१ मठो दण्डिमान् दण्डिसंयोगात्—इत्यादिषु परंपरासंबन्धाश्रयणेन दोषो न, यदि स संबन्धो न स्वीक्रियते तदा दण्डिसंयोगरूपहेतोरधिकरणमव्रयोगितासंन्बधेन मठोऽस्ति तत्र वृद्धदण्डी नास्ति, युवदण्डी नास्ति, इत्याकारकस्तत्तदभावो भविष्यति। तत्तदभावीयप्रतियोगिता तत्तद्दण्डिनिष्ठास्ति प्रतियोगितावच्छदको धर्मो दण्डः स एव साध्यतावच्छेदकः—अनवच्छेदको नास्तीत्यव्याप्तिः। परंतु स्वसमवायिसंयोगरूपपरंपरासंबन्धेन दण्डत्वरूपो धर्मो यदि साध्यतावच्छेदको मन्यते तदा दोषो नास्ति। अत्र स्वशब्देन दण्डत्वरूपो धर्मो गृह्यते तस्य समवायी दण्डः—तस्य पुरुषे संयोगः—एतादृशसंबन्धेन दण्डत्वधर्मः साध्यतावच्छेदकः। अभावीयप्रतियोगिताया अनवच्छेदकोऽप्यस्ति नातोऽव्याप्तिः।

२ साध्यादिभेदेनेति। तादृशस्थले लक्षणान्तरमेव कर्त्तव्यम्। हेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकतानवच्छेदकं यत् साध्यतावच्छेदकतावच्छेदकं तदवच्छिन्नावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। घटो रूपत्वव्याप्यजातिमत्वान् पृथ्वीत्वात्। मठो दण्डिमान् दण्डिसंयोगात्। उभयत्रापि लक्षणस्य समन्वयः। पूर्वोक्तरीत्या हेत्वधिकरणवृत्त्यभावीयप्रतियोगिता रूपत्वव्याप्यजाति-

स्थले साध्यतावच्छेदकतावच्छेदकं प्रतियोगितावच्छेदकतानवच्छेदकमित्येव लक्षणघटकमित्यपि वदन्ति। हेत्वधिकरणं च हेतुतावच्छेदकविशिष्टाधिकरणं वाच्यं, तेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ शुद्धसत्ताधिकरणगुणादिनिष्ठाभावप्रतियोगित्वेऽपि द्रव्यत्वस्य नाव्याप्तिः। एवं हेतुतावच्छेदकसंबन्धेन हेत्वधिकरणं

---

मत्तत्तन्नीलपीतादिरूपेषु तत्तद्दण्डिषु च तिष्ठति तादृशप्रतियोगिताया अवच्छेदिका रूपत्वव्याप्यनीलत्वपीतत्वादिजातयः–दण्डश्च अभावीयप्रतियोगिताया अवच्छेदकताया अनवच्छेदकस्तथा साध्यतावच्छेदकताया अवच्छेदकः–रूपत्वव्याप्यजातित्वं तथा दण्डत्वमस्ति तदवच्छिन्ना रूपत्वव्याप्यजातयः–तथा दण्डः–तदवच्छिन्ननीलपीतादि गुणाः–तथा दण्डी–एतद्द्वयं यथाक्रमं समवायेन संयोगेन च साध्यमस्ति। तादृशसाध्येन सह पृथ्वीत्वरूपहेतोः–तथा दण्डिसंयोगरूपहेतोश्च सामानाधिकरण्यमस्ति। एवं व्याप्तिलक्षणं संगच्छते। परंपरासंबन्धेनावच्छेदकस्य प्रयोजनं न।

१ हेत्वधिकरणं चेति–हेत्वधिकरणवृत्त्यभावीयप्रतियोगितानवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। इति लक्षणे हेत्वधिकरणमपि हेतुतावच्छेदको यो धर्मस्तद्विशिष्टाधिकरणं ग्राह्यम्। अन्यथा द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात्" इत्यत्राव्याप्तिः। विशिष्टं शुद्धान्नातिरिच्यत इति न्यायेन विशिष्टसत्तायाः शुद्धसत्तायाश्चैकरूपत्वेन तदधिकरणं गुणकर्माण्यपि तद्वृत्तिर्योऽभावः–द्रव्यत्वं नास्तीत्याकारकः–तादृशाभावीयप्रतियोगिताया अवच्छेदक एव द्रव्यत्वत्वरूपः साध्यतावच्छेदकः अनवच्छेदकः न भवतीत्यव्याप्तिः। परंतु हेत्वधिकरणता यदि हेतुतावच्छेदकविशिष्टाधिकरणता गृह्यते तदा नास्त्यव्याप्तिः। यद्यपि गुणकर्मान्यत्वविशिष्टसत्ता शुद्धसत्ताया भिन्ना नास्ति तथापि गुणकर्मान्यत्वविशिष्टसत्तात्वेन विशिष्टसत्ता भिन्नास्ति तस्या अधिकरणं केवलं द्रव्यं वर्तते तत्र द्रव्यत्वरूपसाध्यस्याभावो नास्ति किंतु घटाद्यभावः। इत्यादिसमन्वयः।

२ हेत्वधिकरण–वृत्त्यभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्येन सह सामानाधिकरण्यं व्याप्तिः। हेतुतावच्छेदकसंबन्धेनेति। प्रकृतलक्षणस्य वह्निमान् धूमादित्यत्राव्याप्तिः। समवायसंबन्धेन धूमरूपहेतोः–अधिकरणं धूमावयवाः सन्ति तत्र वर्तमानाभावस्य प्रतियोगी वह्निरूपः साध्योऽस्ति प्रतियोगितावच्छेदको वह्नित्वरूपो धर्मः–अनवच्छेदको नेत्यव्याप्तिः। यदि हेतोर्हेतुतावच्छेदकसंबन्धेन विवक्षा क्रियते तदा दोषो नास्ति। हेतुतावच्छेदकसंबन्धः संयोगस्तेन संबन्धेन धूमाधिकरणं न धूमावयवाः किंतु पर्वतादि तत्र वह्नेः सत्त्वात्तद्वृत्तिर्योऽभावो घटाद्यभावस्तादृशाभावीयप्रतियोगितावच्छेदको धर्मो घटत्वादिः। अनवच्छेदकः साध्यतावच्छेदको वह्नित्वरूपः।

बोध्यम् । तेन समवायेन धूमाधिकरणतदवयवनिष्ठाभावप्रतियोगित्वेऽपि वह्नेर्नाव्याप्तिः । अभावश्च[1] प्रतियोगिव्यधिकरणो बोध्यः । तेन कपिसंयोगी एतद्वृक्षत्वादित्यत्र मूलावच्छेदेनैव एतद्वृक्षवृत्तिकपिसंयोगाभावप्रतियोगित्वेऽपि कपिसंयोगस्य नाव्याप्तिः । न च[2] प्रतियोगिव्यधिकरणत्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं

---

१ अभावश्चेति । प्रकृतलक्षणे यो वै हेत्वधिकरणवृत्त्यभावो विवक्षितः स तु प्रतियोगिव्यधिकरणो विवक्षितः—अर्थात्—अभावः—तत्प्रतियोगी चैतद्द्वयं नैकाधिकरणे विवक्षितम् । अन्यथा—वृक्षः कपिसंयोगवान् एतद्वृक्षत्वात्—अत्राव्याप्तिः । हेतुतावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्न—एतद्वृक्षत्वत्वावच्छिन्न—आधेयतानिरूपिताधिकरणतावानेतद्वृक्ष एव तत्र वर्त्तमानो योऽभावः "मूलावच्छेदेन कपिसंयोगो नास्ति" इत्याकारकोऽभावः तादृशाभावीयप्रतियोगितायाः अवच्छेदक एव कपिसंयोगत्वरूपसाध्यतावच्छेदकधर्मोऽस्ति—अनवच्छेदको नास्ति तस्मादव्याप्तिः । यदि हेत्वधिकरणवृत्त्यभावे प्रतियोगिव्यधिकरणत्वस्य विवक्षा क्रियते तदा दोषो नास्ति । कुतः कपिसंयोगाभावरूपस्य साध्याभावस्य प्रतियोगिसमानाधिकरणत्वेन लक्षणाघटकत्वात् किंतु घटाद्यभाव एव तादृशो भवति तत्प्रतियोगितावच्छेदकं घटत्वादि—अनवच्छेदकः साध्यतावच्छेदकः कपिसंयोगत्वरूपो धर्मः । अतो नास्त्यव्याप्तिः । २ नच प्रतियोगिव्यधिकरणत्वमिति लक्षणघटको योऽभावः स प्रतियोगिव्यधिकरणः अपेक्षित इत्यस्य कोऽर्थः । स्वप्रतियोगिनोऽधिकरणाद्भिन्नाधिकरणे—अपेक्षितश्चेत्तदा "वृक्षः कपिसंयोगवान् एतद्वृक्षत्वात्" इत्यत्र पुनरपि तदवस्थोऽव्याप्तिरूपो दोषः । प्रतियोगिशब्देन कपिसंयोगरूपं साध्यं गृह्यते तदधिकरणं वृक्षादिरस्ति—अनधिकरणं गुणकर्मादिरस्ति तत्र वर्त्तमानो यः कपिसंयोगाभावः स एव मूलावच्छेदेन वृक्षेऽपि तिष्ठति तस्य प्रतियोगितायाः अवच्छेदकमेव कपिसंयोगत्वमनवच्छेदकं न भवतीत्यव्याप्तिः । तद्वारणाय प्रतियोगिव्यधिकरणमित्यंशस्य—प्रतियोग्यधिकरणावृत्तित्वमित्यर्थः । अर्थात् हेत्वधिकरणवृत्त्यभावः स्वप्रतियोग्यधिकरणे स्थितो नापेक्षितः एवमुच्यमाने यद्यपि वृक्षः कपिसंयोगवान् एतद्वृक्षत्वात्" इत्यत्र दूषणं नास्ति । कुतः संयोगस्याव्याप्यवृत्तित्वेन कपिसंयोगाभावस्य निरुक्तप्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकत्वात् । किंतु घटाद्यभाव एव लक्षणघटकः स्यात्तथाच तादृशाभावीयप्रतियोगितायाः अवच्छेदको घटत्वादिधर्मः—अनवच्छेदकः साध्यतावच्छेदकः कपिसंयोगत्वरूपो धर्म इति समन्वयान्नास्ति दोषः । परंतु प्रतियोगिव्यधिकरणत्वमित्यंशस्य प्रतियोग्यनधिकरणावृत्तित्वमित्यर्थकरणे "घटः संयोगवान् सत्त्वात्" इत्यत्रातिव्याप्तिः । अत्र व्यभिचार-

तदा तथैवाव्याप्तिः । प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणादौ वर्तमानो योऽभावस्तस्यैव वृक्षेऽपि मूलावच्छेदेन सत्त्वात्। यदि तु प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगी सत्त्वादित्यादावतिव्याप्तिः । सत्ताधिकरणे गुणादौ यः संयोगाभावस्तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वादिति वाच्यम्, हेत्वधिकरणे प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य विवक्षितत्वात्, स्वप्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभाव इति निष्कर्षः । प्रतियोग्यन-

---

स्थले हेत्वधिकरणं गुणकर्मास्ति तत्र यद्यपि संयोगरूपसाध्यस्याभावो मिलिष्यति तथापि संयोगरूपसाध्यस्याभावो नैव भविष्यति लक्षणघटकः पूर्वोक्तरीत्या । कुतः संयोगरूपसाध्यस्य अभावः पूर्वोक्तरीत्या स्वप्रतियोग्यधिकरणावृत्तिर्नास्ति किंतु–अव्याप्यवृत्तित्वेन स्वप्रतियोग्यधिकरणवृत्तिरेव तस्मादयमभावो लक्षणघटको भवितुं नार्हति तथा चात्रापि हेत्वधिकरणवृत्तिर्घटाद्यभावो गृह्यते तादृशाभावीयप्रतियोगितावच्छेदको घटत्वादिधर्मोऽस्ति । अनवच्छेदकः साध्यतावच्छेदकः संयोगत्वरूपो धर्मः । एवं चालक्ष्ये लक्षणस्य गमनादतिव्याप्तिः । समाधानमाह ।

१ हेत्वधिकरणेति । हेत्वधिकरणवृत्त्यभावविशेषणीभूतस्य प्रतियोगिव्यधिकरणांशस्य को वार्थः । पूर्वोक्तरीत्या नात्रार्थो विवक्षितः किंतु प्रतियोगिव्यधिकरणमिति कथनेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टाभावस्य हेत्वधिकरणे विवक्षास्ति । अयं भावः–हेत्वधिकरणवृत्त्यभावः स्वप्रतियोगिनोऽनधिकरणीभूतहेत्वधिकरणे वर्त्तमानः अपेक्षितः । एवं कथनेन पूर्वोक्तोभयस्थले दोषो नास्ति वृक्षः कपिसंयोगवान् एतद्वृक्षत्वात्, अत्र यद्यपि कपिसंयोगाभावोऽपि मूलावच्छेदेन वृक्षे तिष्ठति तथापि सः अभावः स्वप्रतियोगिनोऽनधिकरणीभूतहेत्वधिकरणे नास्ति किंतु स्वप्रतियोगिनोऽधिकरणीभूतहेत्वधिकरणे तिष्ठति । तस्मात् कपिसंयोगाभावस्य लक्षणघटकत्वाभावाद्घटाद्यभावो गृह्यते तेन च लक्षणसमन्वयः । घटः संयोगवान् सत्त्वात् इत्यत्र सत्तारूपहेत्वधिकरणे गुणादौ संयोगरूपसाध्यस्याभावः स्वप्रतियोगिनोऽनधिकरणीभूतहेत्वधिकरणे तिष्ठति तस्माल्लक्षणघटकोऽस्ति तादृशाभावीयप्रतियोगितावच्छेदक एव साध्यतावच्छेदकसंयोगत्वरूपो धर्मः अनवच्छेदको नास्तीति नातिव्याप्तिः । २ प्रतियोग्यनधिकरणत्वमिति । उक्तलक्षणे प्रतियोग्यनधिकरणीभूतं हेत्वधिकरणं प्रतियोगितावच्छेदकावच्छिन्नस्यानधिकरणं ज्ञातव्यम् । अन्यथा घटो विशिष्टसत्तावान् जातेः " इत्यत्रातिव्याप्तिः अत्र जातिरूपहेतोर्व्यभिचारस्थलं गुणकर्मास्ति । तत्र

धिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वाच्यम्। तेन विशिष्टसत्तावान् जातेरित्यादौ जात्यधिकरणगुणादौ विशिष्टसत्ताभावप्रतियोगिसत्ताधिकरणत्वेऽपि न क्षतिः। एवं साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम्[1]। तेन ज्ञानवान् द्रव्यत्वादित्यादौ द्रव्यत्वाधिकरणघटादेर्विषयतासंबन्धेन ज्ञानाधिकरणत्वेऽपि न क्षतिः। इत्थं[2] च वह्निमान् धूमादित्यादौ धूमाधि-

---

हेत्वधिकरणे गुणकर्मणि विशिष्टसत्ताभावो न मिलिष्यति। विशिष्टं शुद्धान्नातिरिच्यत इति न्यायात्। विशिष्टसत्ताभावस्य प्रतियोगिनी शुद्धसत्ताप्यस्ति तादृशशुद्धसत्ताया अनधिकरणं हेत्वधिकरणं गुणकर्मणी न स्तः। एवं साध्याभावस्य लक्षणघटकत्वाभावेन घटाभावं गृहीत्वा समन्वयादतिव्याप्तिः। यदि प्रतियोगिनोऽनधिकरणं हेत्वधिकरणं प्रतियोगितावच्छेदकधर्मावच्छिन्नस्यानधिकरणमुच्यते तदा हेत्वधिकरणगुणादौ विशिष्टसत्तात्वेन विशिष्टसत्ताया अभावो मिलिष्यति तादृशाभावस्य प्रतियोगिनी विशिष्टसत्तास्ति। प्रतियोगितावच्छेदको धर्मो विशिष्टसत्तात्वरूपः। अनवच्छेदकसाध्यतावच्छेदकधर्मस्याभावेनातिव्याप्तिरूपो दोषो नेति। प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं यद्धेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं तद्वृत्तिर्योऽभावः-तादृशाभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः।

१ एवं साध्यतावच्छेदकसंबन्धेनेति। एवं हेत्वधिकरणे प्रतियोग्यनधिकरणतापि साध्यतावच्छेदकसम्बन्धेन विवक्षितास्ति। अन्यथा-आत्मा ज्ञानवान् द्रव्यत्वात्-इत्यत्र समवायेन साध्यहेतुस्थलेऽतिव्याप्तिः। अत्र द्रव्यत्वरूपहेतोर्व्यभिचारस्थलं घटादिकमस्ति। तत्र ज्ञानरूपहेतोरभावस्तु नैव संभवति। विषयतासंबन्धेन तत्र विद्यमानत्वात्। तर्हि-उदासीनघटादीनामभावो लक्षणघटकः स्यात्, एवमभावीयप्रतियोगिताया अवच्छेदको घटत्वादिधर्मः-अनवच्छेदकः साध्यतावच्छेदको ज्ञानत्वरूपो धर्मः तदवच्छिन्नसाध्येन सह द्रव्यत्वरूपहेतोः सामानाधिकरण्यात्-व्याप्तेर्लक्षणं संगतमित्यतिव्याप्तिः। यदि साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणीभूतं हेत्वधिकरणं कथ्यते तदा साध्यतावच्छेदकः संबन्धः समवायः-तेन संबन्धेन ज्ञानाधिकरणमात्मैवास्ति, अनधिकरणं घटादिकं तत्र वर्तमानो यः समवायसंबन्धावच्छिन्नप्रतियोगिताकज्ञानाभावस्तत्प्रतियोगितावच्छेदक एव ज्ञानत्वरूपः साध्यतावच्छेदको धर्मोऽस्ति-अनवच्छेदको नास्ति-इति नातिव्याप्तिः। २ इत्थं च वह्निमानिति। एवं प्रतियोग्यनधिकरणे साध्यतावच्छेदकसंबन्धनिवेशेन पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिर्नास्ति,

**करणे समवायेन वह्निविरहसत्त्वेऽपि न क्षतिः। ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्प्रतियोगिनोऽनधिकरणत्वं तत्सामान्यस्य वा यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं वा विवक्षितम्। आद्ये कपिसंयोगी एतद्वृक्षत्वादित्यादौ तथैवाव्याप्तिः। कपिसंयोगाभावस्य प्रतियोगितावच्छेदकावच्छिन्नो**

---

अन्यथा हेत्वधिकरणपर्वते समवायसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावस्य सत्त्वात् तादृशाभावीयप्रतियोगितावच्छेदको वह्नित्वधर्मोऽस्ति—अनवच्छेदकसाध्यतावच्छेदकस्याभावेनाव्याप्तिः। यदि प्रतियोग्यनधिकरणे साध्यतावच्छेदकसंबन्धस्य विवक्षा क्रियते तदा साध्यतावच्छेदकसंबन्धेन हेत्वधिकरणपर्वतादौ वह्निरूपसाध्यस्याभावो नैव मिलिष्यति, संयोगसंबन्धेन तत्र वह्नेर्विद्यमानत्वात्। तदा तु घटाद्यभावो लक्षणघटकः स्यात्। अभावीयप्रतियोगितावच्छेदको घटत्वादिधर्मः—अनवच्छेदकः साध्यतावच्छेदको वह्नित्वधर्मः, एवं लक्षणसमन्वयादव्याप्तिर्न। साध्यतावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं यत्–हेतुतावच्छेदकसंबन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं तद्वृत्त्यभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवछिन्नसाध्यसामानाधिकरण्यं व्याप्तिः।

१ स्वप्रतियोग्यनधिकरणीभूतं—यद्धेतुतावच्छेदकसम्बन्धेन हेतुतावच्छेदकावच्छिन्नाधिकरणं तद्वृत्तिर्योऽभावस्तत्प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः। **ननु प्रतियोगितावच्छेदकावच्छिन्नस्येति**। विशिष्टसत्तावान् जातेः; इत्यादिस्थले—अतिव्याप्तिवारणार्थं त्वया प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावछिन्नानधिकरणत्वं विवक्षितम्। तत्र पृच्छयते किं प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोगिनोऽनधिकरणं कथ्यते किंवा, प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणं कथ्यतेऽथवा यत्किंचित्—यः प्रतियोगितावच्छेदको धर्मस्तदवच्छिन्नानधिकरणं कथ्यते। २ **प्रथमपक्षे**—वृक्षः कपिसंयोगवान् एतद्वृक्षत्वात् अत्राव्याप्तिः। अत्र साध्यतावच्छेदकसमवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदको धर्मः कपिसंयोगत्वमपि गृह्यते तद्धर्मावच्छिन्नयत्किंचित्प्रतियोगिशब्देन भूतलवृत्तिकपिसंयोगोऽपि गृह्यते तादृशभूतलवृत्तिकपिसंयोगस्यानधिकरणं यद्धेत्वधिकरणमेतद्वृक्षस्तद्वृत्त्यभावः "कपिसंयोगो नास्ति" इत्याकारकोऽभावः—तादृशाभावीयप्रतियोगितावच्छेदक एव कपिसंयोगत्वरूपसाध्यतावच्छेदकधर्मोऽस्ति-अनवच्छेदकसाध्यतावच्छेदकस्याभावात्। तद्वारणार्थं यदि प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणं विवक्ष्यते चेत्तदा "वृक्षः कपिसंयोगवान् एतद्वृक्षत्वात्—इत्यादिस्थले दोषवारणं भवति—प्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नसामान्यस्यानधिकरणीभूतं हेत्वधिक-

वृक्षावृत्तिकपिसंयोगोऽपि भवति तदनधिकरणं वृक्ष इति। [1]द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः। सर्वस्यैवाभावस्य पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिसमानाधिकरणत्वात्। न च

---

रणमेतद्वृक्षो नास्ति किंतु प्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नस्यानधिकरणं हेत्वधिकरणमेतद्वृक्षोऽस्ति। एवमभावीयप्रतियोगितावच्छेदकं घटत्वादिधर्मोऽस्ति—अनवच्छेदकः साध्यतावच्छेदकः कपिसंयोगत्वधर्मोऽस्ति नास्त्यतोऽव्याप्तिः।

१ द्वितीये तु प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः। द्वितीयपक्षे प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणमिति विवक्षाकरणे वह्निमान् धूमात्-इत्यादिसद्धेतुमात्रे लक्षणस्यासंभवः। अत्र पूर्वोक्तरीत्या लक्षणघटको घटाद्यभावो भविष्यति परंतु सोऽपि प्रतियोगितावच्छेदकावच्छिन्नयावत्प्रतियोगिनोऽनधिकरणे न तिष्ठति किंतु स्वाभावात्मकप्रतियोगिनः समानाधिकरण एव भवति। तात्पर्यमेवमस्ति—हेत्वधिकरणपर्वते घटाभावस्तथाच पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाव एतद्वयं चैकरूपमेवास्ति। एतदेकरूपापन्नाभावस्य प्रतियोगि-एतद्वयम्। एको घटः, द्वितीयो घटाभावाभावः। स च यद्यपि घटात्मकप्रतियोगिना सह समानाधिकरणो नास्ति तथापि स्वाभावात्मकप्रतियोगिना सहैकाधिकरणवृत्तिरस्ति। अत्रैवमभिप्रायः। यस्मिन्नधिकरणे घटाभावस्तिष्ठति तस्मिन्नेवाधिकरणे घटाभावाभावो नहि तिष्ठति। "अभावविरहात्मत्वं वस्तुनः प्रतियोगिता" एतदाचार्यवचनानुरोधाद् घटाभावाभावस्य घटस्वरूपत्वात्। एवं प्रतियोगी तथा तस्याभाव एतद्वयमेकाधिकरणे न तिष्ठति तस्मात्—घटाभावे पूर्वक्षणवृत्तित्वविशिष्टः, एतद्विशेषणं दत्तम्। एवं घटाभावाधिकरणे यद्यपि घटो न तिष्ठति तथापि पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभाव उत्तरक्षणावच्छेदेन तिष्ठति—एवं पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्याभावः पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्वरूप एवास्ति "विशिष्टं शुद्धान्नातिरिच्यत इति न्यायात्" विशिष्टघटाभावः शुद्धघटाभावस्वरूपोऽस्ति तादृशाभावस्य प्रतियोगी घटस्तथा स्वाभाव एतद्वयमस्ति। एवं यद्यपि तस्य घटात्मकप्रतियोगिना सह सामानाधिकरण्यं नास्ति तथापि प्रतियोगितावच्छेदकावच्छिन्नयावत्प्रतियोग्यन्तर्गतस्वाभावात्मकप्रतियोगिना सह घटाभावादेः सामानाधिकरण्यं भविष्यति। एवंरीत्या प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धिः २ नच वह्निमान् धूमादित्यादौ वह्निमान् धूमादित्यादिस्थले घटाभावादेः पूर्वोक्तरीत्या यद्यपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिना सह पर्वते सामानाधिकरण्यमस्ति तथापि "ज्ञानवान् द्रव्यत्वात्" इत्यादिस्थलेऽतिव्याप्तिवारणार्थं साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधि-

वह्निमान् धूमादित्यादौ घटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं यद्यपि पर्वतादेस्तथापि साध्यतावच्छेदकसंबन्धेन तत्प्रतियोग्यनधिकरणत्वमस्त्येवेति कथं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति वाच्यम्, घटाभावे यो वह्न्यभावस्तस्य घटाभावात्मकतया घटाभावस्य वह्निरपि प्रतियोगी तदधिकरणं च पर्वतादिरित्येवं क्रमेण प्रतियोगिव्यधिकरणस्याप्रसिद्धत्वात्। यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते तथापि धूमाभाववान् वह्न्यभावादित्यादावव्याप्तिः। तत्र साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धः, तेन संबन्धेन सर्वस्यैवाभावस्य पूर्वक्षण-

---

करणत्वं विवक्षितमस्ति प्रकृते साध्यतावच्छेदकसंबन्धः संयोगोऽस्ति–एवं च संयोगसंबन्धेन घटस्य तथा स्वाभावात्मकप्रतियोगिनोऽनधिकरणं हेत्वधिकरणमस्ति तस्मात्प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनो दोषो नास्ति। अयमेव दोषः प्रकारान्तरेणापि संभवति। यथा हेत्वधिकरणपर्वते यो घटाभावस्तद्घटाभावात्मकाधिकरणे ग्राह्यो यो वह्न्यभावः वह्नेरभावो घटाभावस्वरूपोऽस्ति कस्माद्–अभावे विद्यमानो योऽभावस्तस्याधिकरणस्वरूपत्वमेव मन्यन्ते न्यायविदः। एवं घटाभावस्य प्रतियोगी वह्निस्तथा घट इत्येतद्द्वयमस्ति। अत्र वह्निरूपप्रतियोगिनोऽधिकरणे पर्वते तस्य प्रतियोगिव्यधिकरणत्वं नास्ति। एवं प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः पुनरपि तदवस्थैव।

१ यदि च घटाभावादौ वह्न्यभावादिर्भिन्न इत्युच्यते। सिद्धान्ती अह्मभावाधिकरणकाभावस्याधिकरणस्वरूपत्वं न मन्ये तस्माद्घटाभावे विद्यमानो वह्न्यभावो घटाभावात्मको न भवति किं तु पृथग्भावेन स्वप्रतियोग्यधिकरणाद्भिन्नाधिकरणे एव नियमेन तिष्ठति–एवं प्रतियोगिव्यधिकरणाभावस्यासिद्धिर्नास्ति। वादी–एवंकथनेन यद्यपि वह्निमान् धूमादित्यादौ प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनासंभवरूपदोषो नास्ति तथापि "ह्रदो धूमाभाववान् वह्न्यभावात्" इत्यादिस्थले अव्याप्तिदोषोऽस्त्येव। अत्र साध्यतावच्छेदकसंबन्धः स्वरूपसंबन्धः–तेन संबन्धेन वस्तुमात्रस्याभावः पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिना सह हेत्वधिकरणे ह्रदादावस्ति एवमभावसाध्यकस्थले प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या अव्याप्तिरूपो दोषो नियतोऽस्ति। एतद्दोषपरिहारार्थं यदि यत्किंचित्–यः प्रतियोगितावच्छेदको धर्मस्तदवच्छिन्नसामान्यानधिकरणम्–इति तृतीयपक्षाश्रयणं क्रियते तदा "ह्रदो धूमाभाववान् वह्न्यभावात्" इत्यादिस्थले दोषो नास्ति कस्मात् अत्र यत्किंचित्प्रतियोगितावच्छेदकपदेन घटत्वादेरपि

वृत्तित्वविशिष्टस्वाभावात्मकप्रतियोग्यधिकरणत्वं हेत्वधिकरणस्येति। तृतीये तु कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः । तत्रात्मवृत्तिकपिसंयोगाभावाभावः कपिसंयोगस्तस्य च गुणत्वात्प्रतियोगितावच्छेदकं गुणसामान्याभावत्वमपि तदवच्छिन्नानधिकरणत्वं हेत्वधिकरणस्यात्मन इति । मैवम् । यादृशप्रतियोगितावच्छेद-

---

ग्रहणं संभवति । तदवच्छिन्नसामान्यानधिकरणं हेत्वधिकरणं जलह्रदः—तद्वृत्त्यभावीयप्रतियोगितावच्छेदको घटत्वादिधर्मः अनवच्छेदकः साध्यतावच्छेदको धूमाभावत्वरूपस्तदवच्छिन्नो धूमाभावस्तेन सह ह्रदात्मकाधिकरणे वह्न्यभावरूपहेतोः सामानाधिकरण्यमस्ति—एवमव्याप्तिरूपो दोषो नास्ति ।

१ **तृतीये तु कपिसंयोगाभाववान्** । तथापि यत्किंचित्प्रतियोगितावच्छेदकधर्मस्य ग्रहणेन "आत्मा कपिसंयोगाभाववान् आत्मत्वात्" अत्राव्याप्तिः । यद्यपि घटाभावीययत्किंचित्प्रतियोगितावच्छेदकघटत्वधर्मावच्छिन्नस्यानधिकरणं हेत्वधिकरणमात्मास्ति तस्मात्प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धिनिबन्धनः अव्याप्तिरूपो दोषो नास्ति, तथापि हेत्वधिकरणं आत्मा तद्वृत्तिर्यः कपिसंयोगाभावाभावः स कपिसंयोगस्वरूपोऽस्ति संयोगश्च गुणः गुणसामान्याभावाभावरूपः अतस्तत्प्रतियोगिता गुणसामान्याभावेऽपि तिष्ठति । एवं चाभावीयप्रतियोगितावच्छेदकधर्मः गुणसामान्याभावत्वमपि तस्य यत्किंचित्प्रतियोगितावच्छेदकधर्मेण ग्रहणं क्रियते तदा तदवच्छिन्नो गुणसामान्याभावोऽस्ति तादृशगुणसामान्याभावस्यानधिकरणं हेत्वधिकरणमात्मास्ति । एवमव्याप्तिः।
२ **समाधानम्** । यादृशप्रतियोगिताया अवच्छेदकावच्छिन्नस्यानधिकरणं हेत्वधिकरणमस्ति तादृशप्रतियोगिताया अनवच्छेदकः साध्यतावच्छेदको धर्मो विवक्षितोऽस्ति । प्रकृते "आत्मा कपिसंयोगाभाववान् आत्मत्वात्" अत्र यादृशप्रतियोगिताशब्देन गुणसामान्याभावत्वावच्छिन्नगुणसामान्याभावनिष्ठप्रतियोगिताया एव ग्रहणं योग्यमस्ति । एवं गुणसामान्याभावनिष्ठप्रतियोगिताया अनवच्छेदकः साध्यतावच्छेदकधर्मः कपिसंयोगाभावत्वमस्ति । तस्मान्नास्त्यव्याप्तिः । एवं लक्षणस्वरूपं जातम् । साध्यतावच्छेदकसंबन्धावच्छिन्नयादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणं यत् हेतुतावच्छेदकसंबन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नहेत्वधिकरणं तद्वृत्त्यभावीयतादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । समन्वयस्तु—साध्यतावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्ना गुणसामान्याभावाभावीया या गुणसामान्याभावत्वावच्छिन्ना गुणसामान्याभावनिष्ठा प्रतियोगिता तादृशप्रतियोगिताया अवच्छेदकीभूतो यो गुणसामान्याभावत्वरूपो धर्मस्तदव-

कावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य विवक्षितत्वात्। [1]ननु कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः, हेत्वधिकरणस्य महाकालस्य जगदाधारतया सर्वेषामभावानां साध्यतावच्छेदकसंबन्धेन कालिकविशेषणतया प्रतियोग्यधिकरणत्वात्। अत्र केचित्। महाकालभेदविशिष्टघटाभावस्तत्र प्रतियोगिव्यधिकरणो महाकालस्य घटाधारत्वेऽपि महाकालभेदविशिष्टघटानाधारत्वात्। महाकाले महाकालभेदाभावात्। वस्तुतस्तु प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावप्रतियोगितासामान्ये यत्[2]संबन्धा-

---

च्छिन्नो यो गुणसामान्याभावस्तादृशगुणसामान्याभावस्यानधिकरणं यत् हेतुतावच्छेदकीभूतसमवायसंबन्धेन आत्मत्वत्वावच्छिन्नाधिकरणमात्मा तत्र वर्तमानाभावनिरूपिता या गुणसामान्याभावत्वावच्छिन्नगुणसामान्याभावनिष्ठा प्रतियोगिता तादृशप्रतियोगितायां अनवच्छेदकः साध्यतावच्छेदको धर्मः कपिसंयोगाभावत्वरूपस्तदवच्छिन्नकपिसंयोगाभावेन सह आत्मत्वरूपहेतोरात्मरूपैकाधिकरणे सामानाधिकरण्यमस्ति।

१ ननु कालो घटवान् कालपरिमाणादित्यत्र। सर्वेषां पूर्वोक्तानां लक्षणानां "कालो घटवान् कालपरिमाणात्" इत्यत्राव्याप्तिः। अत्र कालिकसंबन्धेन घटः साध्यः। समवायेन कालपरिमाणं हेतुः। हेत्वधिकरणीभूतः महाकालः कालिकविशेषणतासंबन्धेन जगन्मात्रस्याश्रयः। अतः साध्यतावच्छेदककालिकसंबन्धेन स्वप्रतियोग्यधिकरणवृत्तित्वमेव सर्वेषामभावानामिति प्रतियोगिव्यधिकरणाभाव एवाप्रसिद्धः। समाधानम्। अत्र केचित्। हेत्वधिकरणमहाकालेऽभावीयविशेषताघटितसामानाधिकरण्यसंबन्धेन महाकालभेदविशिष्टघटाभावो गृह्यते। स एवाभावः प्रतियोगिव्यधिकरणोऽपि भविष्यति। यद्यपि महाकालो घटस्याधारोऽस्ति तथापि महाकालभेदविशिष्टघटस्याधारो न भविष्यति। अभावीयविशेषणतासंबन्धेन महाकालभेदस्य तत्रासत्त्वात् विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्वात्। २ यत्संबन्धः साध्यतावच्छेदकः संबन्धः, यद्धर्मः साध्यतावच्छेदको धर्मः, तत्र यदि यद्धर्मावच्छिन्नत्वाभावमात्रमुच्यते तदा समवायेन यो वह्न्यभावस्तस्य प्रतियोगितावच्छेदकसंबन्धः समवायस्तेन प्रतियोग्यनधिकरणपर्वतादिवृत्तिः स एव तत्प्रतियोगितावच्छेदकं च वह्नित्वमित्यव्याप्तिः स्यात्। यदि च यत्संबन्धावच्छिन्नत्वाभावमात्रमुच्यते तदा तादृशस्य संयोगेन घटाभावस्य प्रतियोगितायां संयोगसंबन्धावच्छिन्नत्वसत्वादव्याप्तिः स्यादत उभयाभावोपादानम्।

वच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वं बोध्यम्। व्यापकसामानाधिकरण्यं च व्याप्तिः। इत्थं च कालो[1] घटवान् कालपरिमाणादित्यादौ संयोगसंबन्धेन यो घटाभावस्तत्प्रतियोगिनो घटस्यानधिकरणे हेत्वधिकरणे महाकाले वर्तमानः स एव संयोगेन घटाभावस्तस्य प्रतियोगितायां कालिकसंबन्धावच्छिन्नत्वघटत्वावच्छिन्नत्वोभयाभावसत्त्वान्नाव्याप्तिः। धूमवान् वह्नेः, इत्यादावतिव्याप्तिवारणाय सामान्यपदमुपात्तम्।[2] नन्वु[3] प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वावच्छिन्नत्वमप्रसिद्धं गुरुधर्मस्यानवच्छेदकत्वादिति चेन्न, कम्बुग्रीवादिमा-

---

१ "कालो घटवान् कालपरिमाणात्" इत्यत्र संयोगेन घटाभावीयघटनिष्ठप्रतियोगितायां यद्यपि साध्यतावच्छेदकघटत्वधर्मावच्छिन्नत्वमस्ति तथापि साध्यतावच्छेदककालिकविशेषणतासंबन्धावच्छिन्नत्वं नास्ति। एवं चैकसत्त्वे द्वयं नास्तीति प्रतीत्या—उभयाभावः संयोगेन घटाभावीयघटनिष्ठप्रतियोगितायां तिष्ठति। तेन कालिकविशेषणतासंबन्धेन घटत्वधर्मावच्छिन्नस्य कालपरिमाणरूपहेतुव्यापकत्वं सिद्धं, व्यापकसामानाधिकरण्यं च व्याप्तिः। २ शंका—लक्षणे प्रतियोगितासामान्ये—इत्यस्य किं प्रयोजनम्? यत्किंचित्प्रतियोगितायां, इत्येवोच्यमाने—उपस्थितिकृतं लाघवं स्यादिति। **समाधानम्।** सामान्यपदं यावदर्थकम्! तत्स्थाने यदि यत्किंचिन्निवेश्यते तदा पर्वतो धूमवान् वह्नेरित्यत्रातिव्याप्तिः अत्र यत्किंचिच्छब्दग्राह्यघटनिष्ठप्रतियोगितायां पूर्वोक्तरीत्या—उभयाभावस्य प्राप्तत्वेन लक्षणं संगच्छते। अलक्ष्ये लक्षणसंगमनादतिव्याप्तिः। यावदर्थकसामान्यपदस्य निवेशः क्रियते चेत्तदा यावदन्तर्गतायाः संयोगेन धूमाभावीयप्रतियोगिताया अपि ग्रहणं भविष्यति। तात्पर्यमेवमस्ति। संयोगेन धूमाभावो हेत्वधिकरणे लोहपिण्डेऽपि मिलिष्यति परंतु संयोगेन धूमाभावीयप्रतियोगितायामुभयाभावो नास्ति किंतूभयमेवास्त्यतः अतिव्याप्तिर्नास्ति। ३ शङ्का—पूर्वोक्तसमस्तलक्षणानां "पर्वतः प्रमेयवह्निमान् धूमात्" इत्यत्राव्याप्तिः। अत्र साध्यतावच्छेदको धर्मः प्रमेयवह्नित्वमेव स्वीकर्त्तव्यः। तस्यावच्छेदकत्वं न स्वीक्रियते 'संभवति लघुधर्मे गुरौ तदभावात्'। प्रकृते प्रमेयवह्नित्वस्य समनियतस्तथा लघुर्वह्नित्वरूपो धर्मोऽस्ति स एवावच्छेदको भवितुमर्हति। परंतु स साध्यतावच्छेदको नास्ति। साध्यतावच्छेदको धर्मः प्रमेयवह्नित्वरूपः परंतु स गुरुत्वादेवावच्छेदको भवितुं नार्हति। साध्यतावच्छेदकधर्मस्य निवेशः पूर्वोक्तेषु यावल्लक्षणेष्वस्ति। एवमवच्छेदकाप्रसिद्धिनिबन्धनोऽव्याप्तिरूपो दोषः।

न्नास्तीति प्रतीत्या कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताविषयीकरणेन गुरुधर्मस्याप्यवच्छेदकत्वस्वीकारादिति संक्षेपः ॥ ६९ ॥

पक्षवृत्तित्वमित्यत्र पक्षत्वं किं तदाह।

**सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते।**
**स पक्षस्तत्र वृत्तित्वज्ञानादनुमितिर्भवेत् ॥ ७० ॥**

सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता तद्वान्पक्ष इत्यर्थः[1]। सिषाधयिषामात्रं न पक्षता विनापि सिषाधयिषां घनगर्जितेन मेघानुमानात्[2]। अत एव साध्यसंदेहोऽपि न पक्षता विनापि संदेहं तदनुमानात्। सिद्धौ[3] सत्यामपि सिषाधयिषासत्त्वेऽनुमितिर्भवत्येव। अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणम्। तथा च यत्र सिद्धिर्नास्ति तत्र सिषाधयिषायां सत्यामसत्यामपि पक्षता। यत्र च सिषाधयिषाऽस्ति तत्र सिद्धौ सत्यामसत्यामपि पक्षता। यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति तत्र न पक्षता, सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्। ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा, तत्र सिषाधयिषाकाले परामर्शनाशान्नानुमितिः। यत्र सिद्धिपरामर्शसिषाधयिषाः क्रमेण भवन्ति तत्र

---

समाधानम्। पदार्थानां सिद्धिः प्रतीत्यनुरोधेन भवति न तु स्वमन्तव्यानुरोधेन "अत्र कम्बुग्रीवादिमान्नास्ति" इति प्रतीतौ कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकोऽभावो भासते तादृशाभावीयप्रतियोगितापि कम्बुग्रीवादिमत्त्वावच्छिन्नैव भवति। अतः प्रतीत्यनुरोधेन गुरुधर्मेऽप्यवच्छेदकता स्वीक्रियते।

१ सिषाधयिषाविरहविशिष्टपक्षधर्मिकसाध्यवत्तानिश्चयो यत्र नास्ति स पक्षः। २ गगनं मेघवत् गर्जनात्। ३ सिद्धौ सत्यामपीति। सिद्धिर्नाम 'पक्षे साध्यवत्ताज्ञानम्। 'पर्वतो वह्निमान्' इत्याकारकज्ञानसत्त्वेऽपि "पर्वते वह्निविषयकानुमितिर्मे स्यात्" इत्याकारिका या-इच्छा तयाप्यनुमितिर्भवत्येव। यद्यपि पक्षे साध्यवत्ताज्ञानमनुमितिज्ञानस्य प्रतिबन्धकं तथापि सिषाधयिषा उत्तेजिका स्वीकृता। सिषाधयिषाविरहविशिष्टा या केवलसिद्धिः सानुमितेः प्रतिबन्धिकास्ति तस्या अभावो यत्र तत्र पक्षतास्ति। प्रकृते सिद्धिस्तथा सिषाधयिषा-एतद्द्वयमस्ति। तथापि सिषाधयिषाविरहविशिष्टा या देशान्तरीया कालान्तरीया

सिषाधयिषाकाले सिद्धेर्नाशात्प्रतिबन्धकाभावादेवानुमितिः। यत्र सिषाधयिषासिद्धिपरामर्शाः सन्ति तत्र परामर्शकाले सिषाधयिषैव नास्ति। एवमन्यत्रापि सिद्धिकाले परामर्शकाले च न सिषाधयिषा, योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्, तत्कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न, यत्र वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा, ततः सिषाधयिषा तत्र पक्षतासंपत्तये तद्विशेषणस्यावश्यकत्वात्। अत्रेदं बोध्यम्। यादृशयादृशसिषाधयिषासत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृशतादृशसिषाधयिषाविरहविशिष्टसिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता। तेन¹ सिद्धिपरामर्शसत्त्वेऽपि यत्किंचिज्ज्ञानं मे जायतामितीच्छायामपि नानुमितिः। वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं वह्निज्ञानं जायतामितीच्छायां तु भवत्येव। ऐ²वं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः। सि³षाधयिषाविरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमिता प्रतिबन्धका वक्तव्या। तेन पर्वतस्तेजस्वी

---

सिद्धिस्तस्या अभावोऽत्र विद्यते। तस्मात्सिद्धिसत्त्वेपि क्षतिर्नास्ति अत्र विशेषणाभावप्रयुक्तविशिष्टाभावः। सिषाधयिषाविरहो विशेषणम्। सिद्धिर्विशेष्यम्।

१ तादृशेच्छाया यत्किंचिज्ज्ञानविषयकत्वेन प्रकृतानुमितिं प्रत्युत्तेजकता नास्ति। अतो नानुमितिः। २ एवं–प्रकृतानुगमे यद्धेतुकस्य निवेशकरणेन "वह्निव्याप्यधूमवान् पर्वतो वह्निमान्" इत्याकारकधूमपरामर्शकाले "आलोकेन हेतुनानुमितिर्मे जायताम्" इत्याकारिकेच्छयापि–नानुमितिः। सिषाधयिषापरामर्शयोर्भिन्नहेतुविषयत्वात्। ३ अर्थात्। पर्वतो वह्निमान्" इत्याकारकानुमितौ पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन सिध्यात्मकज्ञानस्य प्रतिबन्धकतास्ति। तेन "पर्वतः तेजस्वी, अथवा पाषाणमयो वह्निमान्" इत्याकारकसिद्ध्यात्मकज्ञानसत्त्वेऽपि "पर्वतो वह्निमान्" इत्याकारकमनुमितिज्ञानं नैव रुद्धं स्यात्, एवं नियमोऽस्ति। तद्विशेष्यकतत्प्रकारकानुमितिं प्रति तद्विशेष्यकं तत्प्रकारकं सिद्ध्यात्मकं ज्ञानं प्रतिबन्धकमस्ति। प्रकृतेऽनुमितिज्ञानं पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताशालि वर्तते परंतु सिद्धिज्ञानं प्रथमोदाहरणे तेजस्त्वावच्छिन्नप्रकारकं द्वितीयोदाहरणे पाषाणमयत्वावच्छिन्नविशेष्यकमस्ति। तस्मात् प्रतिबन्धकं भवितुं नार्हति।

पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः । परंतु पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात्पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका, पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि । इदं तु बोध्यम् । यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्यकरादिमान् अयमिति ज्ञानं तत्रासत्यामनुमित्सायां पुरुषस्य प्रत्यक्षं भवति न त्वनुमितिरतोऽनुमित्साविरहविशिष्टसमानविषयकप्रत्यक्षसामग्री कामिनीजिज्ञासादिवत्स्वातन्त्र्येण प्रतिबन्धिका । एवं परामर्शानन्तरं विनापि प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमितिसामग्री भिन्नविषयकप्रत्यक्षे प्रतिबन्धिका ॥ ७० ॥

हेतुप्रसङ्गाद्धेत्वाभासान्विभजते—

**अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।**

---

१ परंतु पक्षतावच्छेदकसामानाधिकरण्येन-परंतु प्रतिबध्यप्रतिबन्धकभावस्थले-एवमपि ज्ञातव्यम् । पक्षतावच्छेदकसामानाधिकरण्येन ( अर्थात् एकस्मिन्पर्वते ) वह्निरूपसाध्यस्य सिद्धावपि तदवच्छेदेन-पक्षतावच्छेदकावच्छेदेन-अर्थात् पर्वतत्वावच्छिन्नेषु यावत्सु पर्वतेषु भवत्येवानुमितिः । तस्मात् पक्षतावच्छेदकावच्छेदेनानुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिः प्रतिबन्धिका पक्षतावच्छेदकसामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रम् । २ इदं तु बोध्यम् । यत्र स्थले दोषवशात् पुरुषे " अयं पुरुषो न वा " इत्याकारकः संशयो जातः पश्चात्सम्यक् चक्षुःसंयोगेन " पुरुषत्वव्याप्यकरचरणादिमानयम् " इत्याकारकः परामर्शो जातः तत्र संशयपक्षताविशिष्टपरामर्शरूपानुमितिसामग्र्यपि विद्यते तथा चक्षुःसंप्रयोगरूपप्रत्यक्षसामग्र्यपि विद्यते परंतु-अनुमितिसामग्र्या अनुमित्सा सहकारिणी न स्यात्तदा पुरुषविषयकं प्रत्यक्षज्ञानमेव भवेत् नानुमित्यात्मकम् । अतोऽनुमित्साविरहविशिष्टानुमितिसामग्रीं प्रति समानविषयिका ( तुल्यविषयिणी ) अर्थात्तद्विषयकानुमितिसामग्री भवति तद्विषयकप्रत्यक्षसामग्री सुन्दरस्त्रीजिज्ञासावत् पक्षताकुक्षौ प्रवेशं विनैव प्रतिबन्धिका । ३ एवं वह्निव्याप्यधूमवान् पर्वतः, इत्यादिपरामर्शानन्तरं यदि " पक्षादिविषयकं प्रत्यक्षं मे जायतामित्याकारकप्रत्यक्षेच्छा-उत्तेजिका

**कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥ ७१ ॥**
**आद्यः साधारणस्तु स्यादसाधारणकोऽपरः ।**
**तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥ ७२ ॥**

तल्लक्षणं तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं तत्त्वम् । तथाहि व्यभिचारादिविषयकत्वेन ज्ञानस्यानुमितिविरोधित्वात्ते दोषाः । यद्विषयकत्वं च यादृशविशिष्टविषयकत्वं बोध्यम् । तेन

---

न स्यात्तदा पक्षादिविषयकं प्रत्यक्षं न स्यात् । किंतु पर्वतो वह्निमान् इत्याकारिकोभयविषयानुमितिरेव भवति ।

१ व्यभिचारादिपञ्च दोषाः " वायुः गन्धवान् स्नेहात् " इत्यत्र भवन्ति । गन्धाभाववज्जलवृत्तित्वात् स्नेहरूपहेतुर्व्यभिचरितः । १ । गन्धवती पृथ्वी तत्र स्नेहरूपहेतुर्नैव तिष्ठत्यतो विरुद्धः । २ । स्नेहरूपहेतोर्गन्धरूपसाध्याभावसाधकः अपृथ्वीत्वरूपहेतुर्विद्यतेऽतः सत्प्रतिपक्षः । ३ । स्नेहरूपहेतुर्वायुरूपपक्षे न तिष्ठत्यतोऽसिद्धः । ४ । स्नेहरूपहेतुर्गन्धरूपसाध्यस्य पक्षेऽभावोऽस्त्यतो बाधितः । ५ । असाधारणानुपसंहारिणौ च व्यभिचारिभेदौ । तत्र यः साध्येन सहैकाधिकरणे न तिष्ठति स हेतुरसाधारणस्तादृशहेतुज्ञानं साध्यसामानाधिकरण्यरूपव्याप्तिज्ञानस्य प्रतिबन्धकम् । यथा 'शब्दो नित्यः शब्दत्वादिति । मीमांसकास्तु शब्दोऽनित्यः शब्दत्वादिति, असाधारणोदाहरणमामनन्ति परंतु कार्यत्वरूपहेतुनाऽनित्यत्वस्य सिद्धत्वेनानित्यत्वस्य समानाधिकरणः शब्दत्वरूपहेतुः नित्यत्वस्य समानाधिकरणो नैव भवति । एतादृशस्थलेऽसाधारण्यभ्रमः । यत्र स्थले साध्यं हेतुर्वा अत्यन्ताभावस्य प्रतियोगि न भवति—अर्थात् केवलान्वयि भवति तत्र स्थलेऽनुपसंहार्यनैकान्तिकः । यथा सर्वमनित्यं प्रमेयत्वात् । २ यद्विषयकत्वेन । व्यभिचारादिविषयकत्वेन ' वह्निर्धूमव्यभिचारी ' इत्यादिज्ञानस्यानुमितिविरोधितास्ति । अतो व्यभिचारादयो दोषाः । ३ लक्षणघटकस्य यद्विषयकपदस्य यादृशविशिष्टविषयकमित्यर्थः । एवं च पर्वतो वह्निमान्, इति सद्धेतुस्थले नास्त्यतिव्याप्तिः । यद्यपि वह्न्यभावप्रकारकपर्वतविशेष्यकत्वेन ' पर्वतो वह्न्यभाववान्, इत्याकारकज्ञानस्य ' पर्वतो वह्निमान्, इत्याकारकानुमितिं प्रति विरोधितास्ति तस्मात्तद्विषये वह्न्यभावादावतिव्याप्तिः समागता । तथापि यादृशविशिष्टशब्देन प्रकृते वह्न्यभावविशिष्टपर्वतस्य ग्रहणमस्ति तत्तु संसारमात्रे अप्रसिद्धमिति नास्त्यतिव्याप्तिः । पक्षे वास्तवरीत्या साध्याभावसत्त्वे बाधो भवति । नेतरत्र प्रकृते पक्षे साध्याभावस्य भ्रमोऽस्ति तस्मात्प्रकृतहेतुर्नैव दुष्टः ।

बाधभ्रमस्यानुमितिविरोधित्वेऽपि न क्षतिः । तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः । न च वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वत इति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात्, तत्र वह्न्यभावव्याप्यवान्पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम्, इष्टापत्तेः । अन्यथा बाधस्यानित्यदोषत्वापत्तेः तस्मात्तत्र वह्न्यभावव्याप्यपाषाणमयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वम्, भ्रमादनुमितिप्रतिबन्धमात्रं, हेतुस्तु न दुष्टः । इत्थं च साध्याभाववद्वृत्तिहेत्वादिकं दोषः । तद्वत्त्वं च हेतौ येन केनापि संबन्धेनेति नव्याः । परे तु यद्विषयकत्वेन ज्ञानस्यानुमिति-

---

१ शंका–यस्मिन्काले यस्मिन्स्थले सिद्धान्तिनः "पर्वतो वह्निमान् धूमात्, इत्याकारकहेतुना "वह्निव्याप्यधूमवान् पर्वतः" इत्याकारकं परामर्शज्ञानं जातं तस्मिन्काले तस्मिन्स्थले वादिनः "पर्वतो वह्न्यभाववान् पाषाणमयत्वात्" इत्याकारकहेतुना वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वतः" इत्याकारकं परामर्शज्ञानं जायते । अत्र द्वितीयपरामर्शेन प्रथमपरामर्शकुक्षिप्रविष्टधूमरूपहेतुः सत्प्रतिपक्षत्वेन हेत्वाभासो जातः । यादृशविशिष्टविषयत्वरूपकथनानुसारेण तत्र हेत्वाभासत्वव्यवहारस्यावश्यकता नास्ति । तत्राभासत्वसंपादकं "वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वतः" इत्याकारकं विरोधिपरामर्शज्ञानं भवति तत्र वह्न्यभावविशिष्टपर्वतांशः अप्रसिद्धः । अर्थात् पाषाणमयत्वरूपहेतौ वह्न्यभावनिरूपितव्याप्यता नास्ति । तस्मात्पाषाणमयत्वरूपहेतुना धूमरूपहेतोराभासत्वं न युक्तम् । समाधानमिष्टापत्तेः । २ अन्यथा–यदि । प्रतिबन्धकीभूतभ्रमविषयस्यापि दोषत्वेन ग्रहणं क्रियते चेत्तदा बाधोऽप्यनित्यदोषः स्यात् । अयं भावः पक्षे साध्याभावस्य भ्रमेण सद्धेतुर्वास्तवरीत्या नैव दुष्टः । परंतु यदि पूर्वोक्तरीत्या हेतौ सत्प्रतिपक्षता स्वीक्रियते तदा पक्षे साध्याभावस्य भ्रमेण सद्धेतुविषयेऽपि बाधदोषेण दुष्टव्यवहारः कर्त्तव्यः स्यात् । परंतु स कस्यापि नेष्टः । तस्मात्तत्राप्येवं मन्तव्यं "वह्न्यभावव्याप्यपाषाणमयत्ववान् पर्वतः" इत्याकारकपरामर्शस्थले वह्निव्याप्यधूमरूपहेतोराभासत्वं नास्ति किंतु भ्रमादनुमितिप्रतिरोधमात्रम् । ३ परे तु यद्विषयकत्वेन–येषां मते सत्प्रतिपक्षादिदोषाणामनित्यत्वमस्ति तेषां मते "हेतोराभासा हेत्वाभासाः" इति व्युत्पत्त्या हेत्वाभासशब्दो दोषपरः । एवं च दोषवत्ता हेतौ–एकज्ञानविषयत्वसंबन्धेन सर्वत्र तिष्ठति । यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वमिति लक्षणं तेषां मते दोषाणामस्ति । तादृशदोषवत्त्व एकज्ञानविषयत्वसंबन्धेन हेत्वाभासव्यवहारः । सत्प्रतिपक्षादिस्थले विरोधिव्या-

विरोधित्वं तद्वत्त्वं हेत्वाभासत्वम् । सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा । तद्वत्त्वं च हेतोर्ज्ञानरूपसंबन्धेन । न चैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभावविषयकत्वेनानुमितिविरोधित्वाज्ज्ञानरूपसंबन्धेन तद्वत्त्वस्यापि सत्त्वात्सद्धेतोरपि बाधितत्वापत्तिरिति वाच्यं, तत्र ज्ञानस्य संबन्धत्वाकल्पनात् । अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् । तत्र बाधित इति व्यवहाराभावादित्याहुः । अनुमितिविरोधित्वं च अनुमितितत्करणान्यतरविरोधित्वम् । तेनैकहेतौ व्यभिचारग्रहे हेत्वन्तरेणानुमित्यु-

---

प्त्यादिकमेव दोषरूपेण गृह्यते । तादृशदोषवत्ता हेतौ "अयं विरुद्धव्याप्तिविशिष्टो हेतुः" इत्याकारकैकज्ञानविषयत्वसंबन्धेन ज्ञातव्या ।

१ न चैवं वह्निमान् धूमात् । एवं रीत्या सत्प्रतिपक्षस्यानित्यदोषत्वं मन्यमानस्य मते बाधोऽप्यनित्यदोषो भविष्यति । यद्यपि 'वह्निमान् धूमात्,' इत्यादिसद्धेतौ पक्षे साध्याभावस्याभावेन बाधो नास्ति तथापि 'पर्वतो वह्न्यभाववान्' इत्याकारकबाधभ्रमः संभवति । स एव साध्याभावविषयकत्वेन 'पर्वतो वह्निमान्' इत्याकारकानुमितेर्विरोधी, अस्मिन्मते यद्विषयकत्वेनेत्यस्य यत्प्रकारकत्वेनेत्यर्थकतया यत्पदेन वह्न्यभावस्य ग्रहणात्तद्वत्त्वं वह्न्यभावो धूमश्च" इत्याकारकैकज्ञानविषयत्वेन धूमरूपहेताविति सद्धेतोरपि बाधितत्वापत्तिः । २ समाधानम् । तत्र–बाधकालीनधूमादिसद्धेतौ–एकज्ञानविषयत्वरूपसंबन्धस्य कल्पनैव न क्रियते । सद्धेतौ 'अयं हेतुर्बाधितः' इति व्यवहाराभावात् । ३ अत्र सत्प्रतिपक्षित इति । अत्र प्रतिपरामर्शकालीनधूमादिसद्धेतौ 'अयं हेतुः सत्प्रतिपक्षितः' इत्याकारकव्यवहारेण पूर्वोक्तरीत्या ज्ञाने संबन्धत्वकल्पना भविष्यति । तस्मात्सत्प्रतिपक्षस्यानित्यदोषत्वस्वीकरणे नास्ति दोषः । ४ अनुमितिविरोधित्वं चानुमिति० ॥ लक्षणघटकानुमितिविरोधित्वमित्यस्यानुमितितत्करणान्यतरविरोधित्वमित्येवार्थः । यादृशविशिष्टविषयकत्वेन ज्ञानस्यानुमितितत्करणान्यतरविरोधित्वं तत्त्वम् । एतादृशलक्षणेन परामर्शविरोधिज्ञानविषयव्यभिचार्यादिहेतूनामपि संग्रहो जातः । अन्यथा 'वह्निर्धूमव्यभिचारी' इत्याकारकज्ञानस्य साक्षादनुमितिविरोधित्वाभावेन व्यभिचार्यादिहेतुष्वव्याप्तिः । अनुमितिपदेनानुमितितत्करणान्यतरग्रहणे तु न दोषः ॥५ अतः परं 'तेन व्यभिचारिणि नाव्याप्तिः । दोषज्ञानं च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकम् । तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानुमित्युत्पत्तिस्तदभावाद्यनवेत्यादिपाठः सर्वेषु मुद्रितपुस्तकेषु दृश्यते । परंतु स न युक्तः । तथाहि–तेनैकहेतावित्यत्र तेनेत्यस्या-

त्पत्तेस्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः। यादृशपक्षसाध्यहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम्। पञ्चत्वकथनं तु तत्संभवस्थलाभिप्रायेण। एवं च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम्। साधारणः साध्यवदन्यवृत्तिर्हेतुः। तेन च व्याप्तिग्रहप्रतिबन्धः क्रियते। असाधारणः साध्यासमानाधिकरणो हेतुः। तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते। तथा शब्दो नित्यः शब्दत्वादित्यादावसाधारण्यं शब्दोऽनित्यः शब्दत्वादित्यादौ त्वसाधारण्यभ्रमः। अन्ये तु सपक्षावृत्तिरसाधारणः। सपक्षश्च निश्चितसाध्यवान्। इत्थं च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं तत्र हेतुनिश्चयादिति वदन्ति। अनुपसंहारी चात्यन्ताभावाप्रतियोगिसाध्यकादिः। अनेन च व्यतिरेक-

---

नुमितिविरोधित्वपदेन अनुमितितत्करणान्यतरविरोधित्वस्य विवक्षितत्वेनेत्यर्थः। एकहेतौ प्रमेयत्वादौ। हेत्वन्तरेण धूमादिना। अनुमित्युत्पत्तेरिति व्यभिचारज्ञानस्यानुमितिविरोधित्वाभावे हेतुः। अतएव तदभावाद्यनवगाहित्वाच्चेति चकारः संगच्छते। प्रथमान्तपाठाङ्गीकारे तदसंगतिः स्पष्टैव। तथाच व्यभिचारात्तत्साध्यकानुमितिं प्रति तन्निरूपितव्यभिचारज्ञानत्वेन प्रतिबन्धकत्वासंभवेऽपि न क्षतिरित्यर्थः। अत्र यदि तद्धेतुकतत्साध्यकानुमितिं प्रति तद्धेतौ तत्साध्यनिरूपितव्यभिचारज्ञानं प्रतिबन्धकं तथाच दर्शितव्यभिचाराभावेनानुमितिव्यभिचारज्ञानयोः साक्षात्प्रतिबन्ध्यप्रतिबन्धकभावस्य निष्प्रत्यूहत्वादनुमितिपदस्योक्तान्यतरपरत्वविवक्षणं निष्प्रयोजनमिति कश्चिद्ब्रूयात्ततो दोषान्तरमाह—तदभावाद्यनवगाहित्वाच्चेति। तद्वत्ताबुद्धौ तदभावावगाहित्वेन तदभावव्याप्यवत्त्वावगाहित्वेन तदभावावच्छेदकतया गृहीतधर्मबुद्धया वा तदभावाद्यवगाहिज्ञानस्य प्रतिबन्धकत्वं भवति। प्रकृते व्यभिचारज्ञानस्य साध्यवत्ताबुद्धिं प्रत्युक्तान्यतमरूपाभावेन प्रतिबन्धकत्वासंभवेऽपि न क्षतिः न व्यभिचारिण्यव्याप्तिरिति तदर्थः। एवं च—'तेन व्यभिचारिणि नाव्याप्तिः' इति 'दोषज्ञानं च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकम्' इति च क्रमेण 'न क्षतिः' इत्यत्र 'तदभावाद्यनवगाहित्वाच्च' इत्यत्र च टिप्पणीरूपेण केन चिल्लिखितं कश्चिल्लेखको व्यत्यस्य ग्रन्थमध्ये प्राक्षिपत्। तादृशं पुस्तकमालम्ब्य प्रथममुद्रणावसरे संशोधयित्रा केनचिदधिकः पाठ इति मत्वा तत्संगतये 'हेत्वन्तरेणानुमित्युत्पत्तेः' इत्यत्र अनुमित्युत्पत्तिरिति प्रथमान्तपाठः कल्पितः स एवोत्तरोत्तरमुद्रितपुस्तकेष्वनुगतः इति प्रतिभाति।

व्याप्तिज्ञानप्रतिबन्धः क्रियते। विरुद्धस्तु[1] साध्यव्यापकीभूताभावप्रतियोगी। अयं साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः। सत्प्रतिपक्षे तु प्रतिहेतुः (द्वितीयहेतुः) साध्याभावसाधकः। अत्र तु हेतुरेवेति विशेषः। साध्याभावसाधक एव हेतुः साध्यसाधकत्वेनोपन्यस्त इति अशक्तिविशेषोपस्थापकत्वाच्च विशेषः। सत्प्रतिपक्षः[2] साध्याभावव्याप्यवान्पक्षः। अगृहीताप्रामाण्यकसाध्यव्याप्यवत्त्वोपस्थितिकालीनागृहीताप्रामाण्यकसाध्याभावव्याप्यवत्त्वोपस्थितिविषयस्तथेत्यन्ये। अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम्। अत्र केचित्। यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेऽपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानं जायते। यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीर्जायते। एवं कोटिद्वयव्याप्यदर्शनेऽपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति। तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव। यत्र चैककोटिव्याप्यदर्शनं तत्राधिकबलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः। फलबलेन चाधिकसमबलभावः कल्प्यत इति वदन्ति। तन्न। तदभाव[3]व्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेषशाब्दबोधादेरनुदयाल्लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रे तस्य प्रतिबन्धकता लाघवात्। न तूपनीतभानविशेषे शाब्दबोधे च पृथक्प्रतिबन्धकता गौरवात्। तथा च प्रतिबन्धकसत्त्वात्कथमनुमितिः। नहि लौकिकसंनिकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्ष-

---

१ विरुद्धस्तु—साध्यव्यापकीभूतः यः अभावस्तस्य प्रतियोगी हेतुर्विरुद्धः। यथा शब्दो नित्यः कृतकत्वात्। २ सत्प्रतिपक्षः—साध्याभावस्य व्याप्यः साध्याभावव्याप्यः स यस्मिन्नस्ति स साध्याभावव्याप्यवान् पक्षः—ह्रदो वह्निमान् धूमात् ह्रदो वह्न्यभाववान् जलात्—इत्यादि। ३ साध्याभावव्याप्यवत्ताज्ञानस्य लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यज्ञानत्वावच्छिन्ने प्रतिबन्धकत्वम्। अर्थात् साध्याभावव्याप्यवत्ताज्ञानस्य लौकिकसंनिकर्षनिष्ठजनकतानिरूपितजन्यताशून्यत्वविशिष्टः दोषविशेषनिष्ठजनकतानिरूपितजन्यताशून्यत्वविशिष्टज्ञानत्वावच्छिन्नं प्रति प्रतिबन्धकतास्ति।

स्थले संशयाकारानुमितिः प्रामाणिकी, येनानुमितिभिन्नत्वेनापि विशेषणीयम्। यत्र[1] च कोटिद्वयव्याप्यवत्ताज्ञानं तत्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथाऽगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति। असिद्धिस्त्वाश्रयासिद्ध्याद्यन्यतमत्वम्, आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः। यत्र च काञ्चनमयः पर्वतो वह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिबन्धः फलम्। स्वरूपासिद्धिस्तु पक्षे व्याप्य[2]त्वाभिमतस्य हेतोरभावः। अत्र च ह्रदो द्रव्यं धूमादित्यादौ पक्षे व्याप्यत्वाभिमतस्य हेतोरभावे ज्ञाते पक्षे साध्यव्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम्। साध्याप्र[3]सिद्धिरपि व्याप्यत्वासिद्धिः। सा च साध्ये साध्यतावच्छेदकस्याभावः, तथाच काञ्चनमयवह्निमानित्यादौ साध्ये साध्यतावच्छेदकाभावे ज्ञाते साध्यतावच्छेदकविशिष्टसाध्यव्याप्यवत्ताज्ञानरूपपरामर्शप्रतिबन्धः फलम्। एवं हेतौ हेतुतावच्छेदकाभावः साधना[4]प्रसिद्धिः। यथा च काञ्चनमयधूमादित्यादौ। अत्र हेतुतावच्छेदकविशिष्टहेतोर्ज्ञानाभावात्तद्धेतुकव्याप्तिज्ञानादेरभावः फलम्। एवं वह्निमान् नीलधूमादित्यादौ गुरुतया नीलधूमत्वं हेतुतानव-

---

१ रत्नकोशकारेण "स्थाणुर्वा पुरुषो वा" इति प्रत्यक्षसंशयमुदाहृत्य सत्प्रतिपक्षस्थले संशयानुमितेः स्थापनं कृतम्। तन्न समीचीनमित्याह—यत्र चेति।

२ व्याप्यत्वेन—हेतुत्वेन—अभिमतो हेतुर्यदि पक्षे न तिष्ठति तदा स्वरूपासिद्धिः, यथा ह्रदो द्रव्यवान् धूमात्—इत्यादौ। ह्रदादिपक्षे व्याप्यत्वेनाभिमतधूमरूपहेतोरभावज्ञानात्—द्रव्यव्याप्यधूमवान् ह्रदः—इत्याकारकपरामर्शप्रतिबन्धः फलम्।

३ साध्याप्रसिद्धिरपि व्याप्यत्वासिद्धेरन्तर्भूतैव। यत्र साध्ये साध्यतावच्छेदकधर्मस्य संभावना नास्ति तत्र साध्याप्रसिद्धिः। यथा पर्वतः काञ्चनमयवह्निमान् धूमात्—इत्यादौ वह्नौ काञ्चनमयत्वरूपसाध्यतावच्छेदकधर्माभावस्य ज्ञानेन—काञ्चनमयवह्निव्याप्यधूमवान् पर्वतः इत्याकारकज्ञानरूपपरामर्शप्रतिबन्धः फलम्।

४ यत्र हेतौ हेतुतावच्छेदकधर्मस्य संभावना नास्ति तत्र साधनाप्रसिद्धिः—यथा पर्वतो वह्निमान् काञ्चनमयधूमात्—इत्यादौ हेतौ काञ्चनमयत्वाभावज्ञानात् हेतुतावच्छेदकविशिष्ट—काञ्चनमयधूम—रूपहेतुज्ञानाभावात्—तद्धर्मिकव्याप्तिज्ञानादेरभावः फलम्।

च्छेदकमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति । बाधस्तु पक्षे साध्याभावादिः । एतस्यानुमितिप्रतिबन्धः फलम् । तद्धर्मिकतदभावनिश्चयो लौकिकसंनिकर्षाजन्यदोषविशेषाजन्यतद्धर्मिकतज्ज्ञानमात्रे विरोधीति । न तु संशयसाधारणं पक्षे साध्यसंसृष्टत्वज्ञानमनुमितिकारणं तद्विरोधितया च बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वमिति युक्तम् । अप्रसिद्धसाध्यकानुमित्यनापत्तेः, साध्यसंशयादिकं विनाऽप्यनुमित्युत्पत्तेश्च । एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं प्रमाणाभावाद्गौरवाच्च । अन्यथा सत्प्रतिपक्षादावपि तद-

---

१ यत्र पक्षे साध्यं न तिष्ठति तत्र बाधाख्यो दोषः । तस्य च एकज्ञानविषयत्वसंबन्धेन हेतौ विद्यमानत्वाद् बाधितत्वव्यवहारः । यथा वह्निरनुष्णः द्रव्यत्वात् इत्यादौ–तद्धर्मिकतदभावनिश्चयः–अनाहार्याप्रामाण्यज्ञानानास्कन्दित–तद्धर्मिकतदभावनिश्चयः, लौकिकसंनिकर्षाजन्य–दोषविशेषाजन्य–तद्धर्मिकतज्ज्ञानमात्रं प्रति विरोधी । बाधकालीनेच्छाजन्यं ज्ञानमाहार्यज्ञानं–तद्भिन्नमनाहार्यम्–एवं संशयान्यज्ञानं निश्चयः । अप्रामाण्यप्रकारकज्ञानविशेष्यमप्रामाण्यज्ञानास्कन्दितं तद्भिन्नमप्रामाण्यज्ञानानास्कन्दितम् । अस्य ग्रन्थस्य स्फुटतरं व्याख्यानं ८२–८३ कारिकयोष्टिप्पण्यां द्रष्टव्यम् । २ 'ननु तत्र' इत्यादिग्रन्थेन मतान्तरं प्रतिपाद्यते । पक्षे संशयसाधारणं साध्यसंबन्धस्य ज्ञानमनुमितेः कारणमस्ति । अनुमितिकारणीभूतसाध्यसंसृष्टत्वज्ञानस्य विरोधितया बाधसत्प्रतिपक्षयोर्हेत्वाभासतास्तीति केषांचिन्मतं न सम्यक्–यद्येवं स्यात्तर्हि–'पृथिव्यामितरभेदः' इत्यप्रसिद्धसाध्यकानुमितिर्नैवोत्पद्येत । अयं भावः–उक्तस्थले अनुमितेः प्राक् पक्षे साध्यसंसृष्टत्वज्ञानं केनापि प्रमाणेन नास्ति । घनगर्जनादिस्थले तु साध्यसंशयादिकं विनापि–अनुमितिज्ञानस्योत्पत्तिर्दृश्यते । अतः पक्षे संशयसाधारणसाध्यसंसृष्टत्वज्ञानस्य–अनुमितिं प्रति कारणत्वमनुचितम् । ३ एवं प्राचा साध्याभावज्ञाने प्रमात्वबुद्धेः प्रतिबन्धकता स्वीकृता, अर्थात् ह्रदो वह्निमान्–इत्यनुमितिं प्रति–'ह्रदो वह्न्यभाववान्–इदं ज्ञानं प्रमा' इत्याकारकज्ञानस्य प्रतिबन्धकता मन्यते तत्प्रमाणशून्यत्वेनायुक्तम् । अयं भावः–साध्याभावज्ञानस्य प्रतिबन्धकताग्राह्याभावावगाहितयास्ति–इदं ज्ञानं प्रमा-इति ज्ञानं तु ग्राह्याभावानवगाहि प्रकृते च ग्राह्याभावावगाहि 'ह्रदो वह्न्यभाववान्'–इति ज्ञानमेव भवति ननु–इदं ज्ञानं प्रमाइत्याकारकम् । एवं पक्षविशेष्यकसाध्याभावज्ञाने प्रमात्वनिश्चयत्वरूपगुरुधर्मेण प्रतिबन्धकत्वकल्पनापेक्षया संशयनिश्चयसाधारणाप्रामाण्यज्ञानाभाववत्त्वेन प्रतिबन्धकता स्वीकर्तव्या लाघवात्, । ४ अन्यथा–साध्याभावज्ञाने प्रमात्वज्ञानस्य प्रतिबन्धकत्वे सत्प्रतिपक्षादिस्थलेऽपि अनुमितिं प्रति साध्याभावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेनैव प्रतिबन्धकता वक्तव्या स्यात् । सा तु न केषामप्यभिमता ।

भावव्याप्यवत्ताज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः। किंतु भ्रमत्वज्ञानानास्कन्दितबाधादिबुद्धेः प्रतिबन्धकता, तत्र भ्रमत्वशङ्काविघटनेन प्रामाण्यज्ञानं क्वचिदुपयुज्यते। न च बाधस्थले पक्षे हेतुसत्त्वे व्यभिचारः, पक्षे हेत्वभावे तु स्वरूपासिद्धिरेव दोष इति वाच्यं, बाधज्ञानस्य व्यभिचारज्ञानादेर्भेदात्। किं च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिंचित्करत्वाद्बाधस्यानुमितिप्रतिबन्धकत्वं वाच्यम्। एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव प्रतिबन्धकत्वं वाच्यम्। न च पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यं, पक्षतावच्छेदकदेशकालावच्छेदेनानुमितेरनुभवसिद्धत्वादिति। [1]बाधसत्प्रतिपक्षभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति। अन्यथा हेत्वाभासाधिक्यप्रसङ्गात्। बाधव्याप्यसत्प्रतिपक्षस्तु भिन्न एव, स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात्। सत्प्रतिपक्षव्याप्यस्तु न प्रतिबन्धक इतिप्रघट्टकार्थः॥ ७१॥ ७२॥

**यः सपक्षे विपक्षे च भवेत्साधारणस्तु सः।**

यः सपक्ष इति। सपक्षविपक्षवृत्तिः साधारण इत्यर्थः। सपक्षो निश्चितसाध्यवान्। विपक्षः साध्याभाववान्। विरुद्धवारणाय सपक्षवृत्तित्वमुक्तम्। वस्तुतो विपक्षवृत्तित्वमेव वाच्यम्, विरुद्धस्य साधारणत्वेऽपि दूषकताबीजस्य भिन्नतया तस्य [2]पार्थक्यात्।

**यस्तूभयस्माद्व्यावृत्तः स चासाधारणो मतः॥ ७३॥**

यस्तूभयस्मादिति। सपक्षविपक्षव्यावृत्त इत्यर्थः। सपक्षः साध्यवत्तया निश्चितः। विपक्षः साध्यशून्यतया निश्चितः। [3]शब्दो-

१ बाधसत्प्रतिपक्षभिन्ना ये हेत्वाभासाः व्यभिचारादयस्तद्व्याप्या अपि तन्मध्येऽन्तर्भवन्ति व्यभिचारादेरिव व्यभिचारादिव्याप्यस्यापि व्याप्तिग्रहप्रतिबन्धकज्ञानविषयत्वेन पञ्चहेत्वाभासानन्तर्गतत्वे तस्यातिरिक्तहेत्वाभासत्वं स्यादित्यर्थः।

२ पार्थक्यादिति। साधारणः—अव्यभिचारज्ञानं प्रति प्रतिबन्धकः। विरुद्धस्तु सामानाधिकरण्यग्रहस्य प्रतिबन्धकः—एवं दूषकताबीजस्य भिन्नत्वात्।

३ यदा—शब्दोऽनित्यः शब्दत्वात्—इत्यादौ शब्दात्मकपक्षे—अनित्यत्वरूपसाध्यस्य

ऽनित्यः शब्दत्वादित्यादौ यदा शब्देऽनित्यत्वसन्देहस्तदा सपक्षत्वं घटादीनामेव, तद्व्यावृत्तं च शब्दत्वमिति तदा तदसाधारणम् । यदा तु शब्देऽनित्यत्वनिश्चयस्तदा नासाधारणः इदं च प्राचां मतम् । नवीनमतं तु पूर्वमुक्तम् ॥ ७३ ॥

**तथैवानुपसंहारी केवलान्वयिपक्षकः ।**

तथैवेति । केवलान्वयिपक्षक इति । केवलान्वयिधर्मावच्छिन्नपक्षक इत्यर्थः । सर्वमभिधेयं प्रमेयत्वादित्यादौ सर्वस्यैव पक्षत्वात्सामानाधिकरण्यग्रहस्थलान्तराभावान्नानुमितिः । इदं तु न सम्यक्, पक्षैकदेशे सहचारग्रहेऽपि क्षतेरभावात् । अस्तु वा सहचाराग्रहस्तावताप्यज्ञानरूपासिद्धिरेव न तु हेत्वाभासत्वं तस्य, तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् ।

**यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥ ७४ ॥**

यः साध्यवतीति । एवकारेण साध्यवत्त्वावच्छेदेन हेत्वभावो बोधितः । तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः ॥ ७४ ॥

**आश्रयासिद्धिराद्या स्यात्स्वरूपासिद्धिरप्यथ ।**
**व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥ ७५ ॥**
**पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।**
**ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥ ७६ ॥**

---

संदेहस्तदा सपक्षः–घटपटादिकं भवति तत्तु–अनित्यत्वरूपसाध्यवत्त्वेन निश्चितमस्ति–विपक्षः-गगनादिकमस्ति–ताभ्यां व्यावृत्तः शब्दरूपपक्षमात्रे स्थितो हेतुरसाधारणो भवति । परंतु यदि शब्दे कृतकत्वेन हेतुना अनित्यत्वनिश्चयस्तदा शब्दत्वरूपो हेतुरसाधारणो न भवति । नवीनमतं तु–साध्यासमानाधिकरणो हेतुरसाधारणः–इत्युक्तम् ।

१ यस्य हेतोः पक्षः, लक्षणया पक्षता, केवलान्वयिन्यस्ति सोऽनुपसंहारी–पक्षताचात्र साध्यसंशयरूपा ग्राह्या । तेन सर्वमभिधेयं प्रमेयत्वात्–इत्यादौ वस्तुमात्रस्य पक्षत्वात्साध्यनिश्चयस्य कुत्राप्यसंभवेन व्यापकसामानाधिकरण्यविशिष्टप्रमेयत्वादिरूपव्याप्तिज्ञानानुत्पादान्नानुमितिरित्यनुपसंहारिणो हेत्वाभासत्वमिति भावः ।

**व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत्।**

असिद्धिं विभजते। आश्रयासिद्धिरित्यादि। पक्षासिद्धिरिति। आश्रयासिद्धिरित्यर्थः। अपरेति। स्वरूपासिद्धिरित्यर्थः। नीलधूमादिक इति। नीलधूमत्वं गुरुतया न हेतुतावच्छेदकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वात्। धूमप्रागभावत्वसंग्रहाय स्वसमानाधिकरणेति।

**विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता॥ ७७॥**

विरुद्धयोरिति। कपिसंयोगतदभावव्याप्यवत्तापरामर्शेऽपि न सत्प्रतिपक्षत्वमत उक्तं—विरुद्धयोरिति। तथा च स्वसाध्यवि-

---

१ मणिमयः पर्वतो वह्निमान्, धूमात्—इत्यादिस्थले—आश्रयासिद्धिः। २ पर्वतो वह्निमान् नीलधूमात्—इत्यादिस्थले व्याप्यत्वासिद्धिः। अत्र नीलधूमत्वरूपो धर्मो गुरुभूतोऽतो हेतुतावच्छेदको न भवति स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितधर्म एव व्याप्यतावच्छेदको भवति। प्रकृते स धर्मः—नीलधूमत्वरूपः। तस्यैव स्वपदेन ग्रहणम्। एवं नीलधूमत्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरं शुद्धधूमत्वं भवति। तादृशशुद्धधूमत्वरूपधर्मेण घटित एव नीलधूमत्वरूपो धर्मः—अघटितो नास्ति तस्मान्नीलधूमत्वं व्याप्यतावच्छेदकं भवितुं नार्हति। किंतु धूमत्वरूपधर्म एव व्याप्यतावच्छेदकधर्मान्तराघटितो भवितुमर्हतीति कृत्वा पूर्वोक्तव्याप्यतावच्छेदकलक्षणस्य लक्ष्यं भवति। ३ अत्र व्याप्यतावच्छेदकलक्षणे स्वसमानाधिकरणांशस्य फलं तु—यज्ञशाला वह्निमती भविष्यति धूमप्रागभावात्—इत्यादिस्थले धूमप्रागभावत्वस्य संग्रहः अर्थात् केवलं व्याप्यतावच्छेदकधर्मान्तराघटितमेवोच्यते तदा धूमप्रागभावत्वरूपधर्मः—व्याप्यतावच्छेदकधर्मान्तराघटितो नास्ति किंतु व्याप्यतावच्छेदकीभूतधूमत्वरूपधर्मेण घटित एवास्ति—एवं चावच्छेदको भवितुं नार्हति परंतु यदि लक्षणे स्वसमानाधिकरणांशस्य निवेशः क्रियते तदा दोषो न। धूमप्रागभावत्वरूपो धर्मः—धूमप्रागभावेऽस्ति धूमत्वं धूमे तिष्ठति—एवमनयोः परस्परं सामानाधिकरण्यं नास्ति। मम तु स्वसमानाधिकरणधर्मान्तराघटितत्वं विवक्षितम्। अत्र तु व्यधिकरणधर्मान्तरघटितत्वमस्तीति न तदसंग्रहः। ४ वृक्षत्वादिहेतौ कपिसंयोगस्तथा कपिसंयोगाभावः—अनयोर्व्याप्यत्वपरामर्शेऽपि न सत्प्रतिपक्षत्वव्यवहारः परस्परविरोधाभावात्। स्वसाध्येन विरुद्धो यः साध्याभावः तद्व्याप्यवत्तापरामर्शकाले एव साध्यव्याप्यवत्तापरामर्शस्य विषयः सत्प्रतिपक्षो भवति। ह्रदो वह्निमान् धूमात्—

रुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषयइत्यर्थः ॥ ७५ ॥ ७६ ॥ ७७ ॥

**साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।**
**उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥ ७८ ॥**

साध्यशून्य इति । पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः । तेन घटे गन्धसत्त्वेऽपि न क्षतिः । एवं मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यत्रापि बोध्यम् ॥ ७८ ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यामनुमानखण्डम् ।

---

उपमितिं व्युत्पादयति—

**ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।**
**सादृश्यधीर्गवादीनां या स्यात्सा करणं मतम् ॥ ७९ ॥**
**वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।**
**गवयादिपदानां तु शक्तिधीरुपमा फलम् ॥ ८० ॥**

यत्रारण्यकेन केनचिद्ग्रामीणं प्रत्युक्तं गोसदृशो गवयपदवाच्य इति । पश्चाद्ग्रामीणेन क्वचिदरण्यादौ गवयो दृष्टस्तत्र गोसादृश्यज्ञानं यज्जातं तदुपमितिकरणम् । तदनन्तरं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः । तदनन्तरं

---

इत्यादौ स्वपदेन सत्प्रतिपक्षत्वेनाभिमतस्य धूमस्य ग्रहणम् । तत्साध्यं वह्निस्तद्विरुद्धो यः साध्याभावो वह्न्यभावस्तद्व्याप्यवत्तापरामर्शः धूमाभावव्याप्यजलवान् ह्रदः इति परामर्शः, तत्कालीनो यः साध्यव्याप्यवत्तापरामर्शः वह्निव्याप्यधूमवान्ह्रद इति तद्विषयो धूमः सत्प्रतिपक्ष इत्यर्थः ।

१ 'उत्पत्तिकालावच्छिन्नो घटः गन्धवान् पृथ्वीत्वात्,' अत्र बाधो दोषः । अत्र पक्षशब्देन पक्षतावच्छेदकदेशकालविशिष्टपक्षस्य ग्रहणम् । तेन कालान्तरे घटे गन्धसत्वेऽपि नाव्याप्तिः । एवं—मूलावच्छिन्नो वृक्षः कपिसंयोगी एतद्वृक्षत्वात्—अत्र वृक्षे शाखावच्छेदेन कपिसंयोगसत्त्वेऽपि पक्षतावच्छेदकमूलावच्छेदेन कपिसंयोगो नास्ति एवं मूलरूपदेशस्यावच्छेदकत्वेन बाधः संभवति ।

तत्र गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिः न त्वयं गवयपदवाच्य इत्युपमितिः, गवयान्तरे शक्तिग्रहाभावप्रसङ्गात् ॥ ७९ ॥ ८० ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां सिद्धान्तमुक्तावल्यामुपमानखण्डम्।

---

शाब्दबोधप्रकारं दर्शयति—

**पदज्ञानं तु करणं, द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥ ८१ ॥**

पदज्ञानं त्विति। न तु [1]ज्ञायमानं पदं करणं पदाभावेऽपि मौनिश्लोकादौ शाब्दबोधात्। पदार्थधीरिति। पदजन्यपदार्थस्मरणं व्यापारः। अन्यथा पदज्ञानवतः प्रत्यक्षादिना पदार्थोपस्थितावपि शाब्दबोधापत्तेः। तत्रापि वृत्त्या पदजन्यत्वं बोध्यम्। अन्यथा घटादिपदात्समवायसंबन्धेनाकाशस्मरणे जाते आकाशस्यापि शाब्दबोधापत्तेः। [2]वृत्तिश्च शक्तिलक्षणान्यतरः संबन्धः। [3]अत्रैव शक्तिज्ञानस्योपयोगः। पूर्वं शक्तिग्रहाभावे पदज्ञानेऽपि तत्संबन्धेन स्मरणानुपपत्तेः। पदज्ञानस्य च एकसंबन्धिज्ञानविधयार्थस्मारकत्वम्। शक्तिश्च पदेन सह पदार्थस्य संबन्धः। स चास्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छारूपः। आधुनिके नाम्नि शक्तिरस्त्येव।

---

१ शाब्दबोधे पदज्ञानं करणं न तु ज्ञायमानं पदम्। अयंभावः—शब्दमात्रस्य ज्ञानं श्रोत्रादेवेति स्वभावः—पदमपि शब्दविशेषस्यैव नाम तस्यापि ज्ञानं श्रोत्रादेव, परंतु मौनिपुरुषेण—अक्षरलेखनद्वारा हस्तादिचेष्टाद्वारा वा परः प्रत्याययितस्तत्र पदोच्चारणाभावेऽपि केवलपदज्ञानमात्रेण शाब्दबोधो भवति तस्माज्ज्ञायमानं पदं न करणं किंतु पदज्ञानं करणम्। २ वृत्तिर्नाम अर्थस्मृत्यनुकूलः पदपदार्थयोः परस्परसंबन्धः। स च द्विविधः। शक्तिरूपो लक्षणाश्च। ३ अत्रैव पदजन्यपदार्थोपस्थितावेव शक्तिज्ञानस्योपयोगः। एकसंबन्धिज्ञानविधया—अर्थात्—एकसंबन्धिज्ञानमपरसंबन्धिस्मारकम्, इति नियमेन हस्तिनं दृष्ट्वा हस्तिपकस्य तं च दृष्ट्वा हस्तिनः स्मरणं भवति—एवमेव पदज्ञानस्यापि संबन्धिज्ञानविधयार्थस्मारकत्वमस्ति।

एकादशेऽहनि पिता नाम कुर्यादितीश्वरेच्छायाः सत्त्वात् । आधुनिके तु सङ्केते न शक्तिरिति संप्रदायः । नव्यास्तु ईश्वरेच्छा न शक्तिः, किंत्विच्छैव तेनाधुनिकसंकेतेऽपि शक्तिरस्त्येवेत्याहुः । शक्तिग्रहस्तु व्याकरणादितः । तथा हि—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥

धातुप्रकृतिप्रत्ययादीनां शक्तिग्रहो व्याकरणाद्भवति । क्वचित्सति बाधके त्यज्यतेऽपि । यथा वैयाकरणैराख्यातस्य कर्तरि शक्तिरुच्यते । चैत्रः पचतीत्यादौ कर्त्रा सह चैत्रस्याभेदान्वयः । तच्च गौरवात्त्यज्यते, किंतु कृतौ शक्तिर्लाघवात्[1] । कृतिश्चैत्रादौ प्रकारीभूय भासते । न[2] च कर्तुरनभिधानाच्चैत्रादिपदानन्तरं तृतीया स्यादिति वाच्यं, कर्तृसंख्यानभिधानस्य तत्र तन्त्रत्वात् । संख्या[3]भिधानयोग्यश्च कर्मत्वाद्यनवरुद्धः प्रथमान्तपदोपस्थाप्यः । कर्मत्वादीत्यस्येतरविशेषणत्वतात्पर्याविषयत्वमर्थः । तेन चैत्रे[4] इव मैत्रो

---

१ लाघवादिति । अयं भावः—लः कर्मणीति व्याकरणसूत्रादाख्यातस्य कर्तरि यदि शक्तिः स्वीक्रियते तदा शक्यतावच्छेदकः कर्तृनिष्ठधर्मविशेषः कृतिरेव मन्तव्यः—सा च प्रतिकर्तृ भिन्ना—एवं च शक्यतावच्छेदका नाना स्युः । एवं नानाधर्माणामवच्छेदकधर्मविषयोपस्थितेः—गौरवं स्यादतो लाघवादाख्यातस्य कर्तृनिष्ठधर्मविशेषकृतौ—एव शक्तिर्मन्तव्या एवं च शक्यतावच्छेदको धर्मः—यावत्कृतिषु विद्यमाना कृतित्वरूपा जातिरेकैवेति परमलाघवम् । २ नचेति । आख्यातप्रत्ययस्य कृत्यर्थकत्वं लाघवाद्यदि स्वीक्रियते तदा कर्तुरनुक्तत्वाच्चैत्रेण पचतीति प्रयोगापत्तिः । समाधानम् । आख्यातप्रत्ययस्य कृतिः संख्याकालादयोऽनेकेऽर्थाः सन्ति । यत्र स्थले कर्तृगतसंख्या आख्यातप्रत्ययेनानुक्ता तत्र तृतीया भवति । प्रकृतोदाहरणे कर्तृगतैकत्वसंख्याया उक्तत्वात्—चैत्रः पचति—इत्यस्यैव साधुत्वं न तु चैत्रेण पचतीत्यस्य । ३ ननु कथं ज्ञायतेऽत्र संख्योक्तात्रानुक्तेति—समाधानम् । कर्मत्वाद्यनवरुद्धः प्रथमान्तपदबोध्यः कर्ता संख्याभिधानयोग्यो भवति । कर्मत्वाद्यनवरुद्ध इत्यस्य—इतरविशेषणत्वेन तात्पर्याविषयत्वरूपः संकेतितोऽर्थः । तथाच इतरविशेषणत्वेन तात्पर्याविषयत्वविशिष्टप्रथमान्तपदोपस्थाप्यः कर्ता संख्याभिधानयोग्य इति समुदितार्थः । ४ चैत्र इव मैत्रो गच्छतीत्यादिस्थले गच्छत्युत्तरवर्त्याख्यातवाच्यसंख्यायाश्चैत्रेऽन्वयो भवितुं नार्हति

गच्छतीत्यादौ न चैत्रे संख्यान्वयः। यत्र कर्मादौ न विशेषणत्वे तात्पर्यं तद्वारणाय प्रथमान्तेति। यद्वा[1] धात्वर्थातिरिक्ताविशेषणत्वं प्रथमदलार्थः। तेन चैत्र इव मैत्रो गच्छतीत्यत्र चैत्रादेर्वारणम्। स्तोकं पचतीत्यादौ स्तोकादेर्वारणाय च द्वितीयदलम्। तस्य द्वितीयान्तोपस्थाप्यत्वाद्वारणमिति। एवं[2] व्यापारेऽपि न शक्ति-गौरवात्। रथो गच्छतीत्यादौ तु स्वव्यापारे आश्रयत्वे वा लक्षणा। जानातीत्यादौ तु आश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे निरूढलक्षणा। उपमानाद्यथा[3] शक्तिग्रहस्तथोक्तम्। एवं कोशा[4]दपि शक्तिग्रहः सति बाधके क्वचित्त्यज्यते। यथा नीलादिपदानां नील-रूपादौ नीलादिविशिष्टे च शक्तिः, कोशेन व्युत्पादिता तथापि लाघवान्नीलादावेव शक्तिः, नीलादिरूपविशिष्टे तु लक्षणेति।

---

किंतु मैत्रेऽन्वयः। चैत्रपदार्थः इवपदार्थसादृश्ये विशेषणत्वेन तात्पर्यविषयः। तथा च चैत्रनिरूपितं यत् सादृश्यं तादृशसादृश्येन यत् गमनं तादृशगमनानुकूला या कृतिस्तादृशकृत्याश्रय एकत्वसंख्याविशिष्टो मैत्र इति शाब्दबोधः। तण्डुलं पचती-त्यादौ–आख्यातार्थसंख्यायाः तण्डुलेऽन्वयवारणाय तथा चैत्रेण सुप्यते इत्यादौ धात्वर्थस्वापादौ संख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्य इत्यस्य निवेशः।

१ यद्वेति। चैत्र इव मैत्रो गच्छतीत्यादौ चैत्रपदार्थो धात्वर्थात्–अतिरिक्त इवार्थसादृश्ये विशेषणमस्ति–अविशेषणं नास्तीति वारणं जातम्। स्तोकं पचति मृदु पचति–इत्यादौ 'क्रियाविशेषणानां कर्मत्वम्' इत्यनुशासनाद् द्वितीयान्तपदोपस्थाप्यत्वेन प्रथमान्तपदोपस्थाप्य इति द्वितीयदलस्याभावान्न दोषः। २ एवमिति। सर्वलकाराणां व्यापारे शक्तिरिति मीमांसकमतमपि न समी-चीनं जन्यत्वादिघटितव्यापारोऽपि यत्नत्व (कृतित्व) जात्यपेक्षया गुरुभूत एव लाघवात्कृतावेव शक्तिः। रथो गच्छतीत्यादौ गमनानुकूलव्यापारेऽथवा-गमनानुकूलव्यापारस्याश्रयत्वेऽनादितात्पर्यवती लक्षणा। ३ गोनिरूपितगवय-निष्ठसादृश्यसाक्षात्काररूपोपमानेन यथा 'गवयो गवयपदवाच्यः' इत्याकारक-शक्तिग्रहो भवति तथोपमाननिरूपणे उक्तम्। ४ कोशादपीति। 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति,' इत्यमरकोशेऽपि शुक्लनीलादिपदानां शुक्लनीलादिरूपे-ष्वेव शक्तिः स्वीकर्तव्या नीलादिमत्त्वापेक्षया नीलत्वादिजातेः शक्यतावच्छेदकत्व-कल्पनायां लाघवात्। नीलादिरूपविशिष्टे च नीलादिपदस्य लक्षणेति सिद्धान्तः। केचित्तु–एवंविधे लक्षणायाः प्रयोजनं नास्ति, "गुणवचनेभ्यो मतुपो लुगिष्टः" इति वार्त्तिकादेव लुप्तमतुप्प्रत्ययस्मरणेन बोधसंभवादिति वदन्ति।

एवमाप्तवाक्यादपि यथा कोकिलः पिकपदवाच्य इत्यादिशब्दात्पिकादिपदशक्तिग्रहः। एवं व्यवहारादपि। यथा प्रयोजकवृद्धेन घटमानयेत्युक्तम्। तच्छ्रुत्वा प्रयोज्यवृद्धेन घट आनीतः। तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं घटमानयेतिशब्दप्रयोज्यमित्यवधारयति। ततश्च घटं नय गामानयेत्यादावावापोद्वापाभ्यां घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति। इत्थं च भूतले नीलो घट इत्यादिशब्दान्न शाब्दबोधः। घटादिपदानां कार्यान्वितघटादिबोधे सामर्थ्यावधारणात्, कार्यताबोधं प्रति च लिङादीनां सामर्थ्यात्तदभावान्न शाब्दबोध इत्यपि केचित्। तन्न। प्रथमतः कार्यान्वितघटादौ शक्त्यवधारणेऽपि लाघवेन पश्चात्तस्य परित्यागौचित्यात्। अत एव 'चैत्र पुत्रस्ते जातः कन्या ते गर्भिणी जाता' इत्यादौ मुखप्रसादमुखमालिन्याभ्यां सुखदुःखे अनुमाय तत्कारणत्वेन परिशेषाच्छाब्दबोधं निर्णीय तद्धेतुतया तं शब्दमवधारयति। तथा च व्यभिचारात्कार्यान्विते न शक्तिः। न च तत्र तं पश्येत्यादि शब्दान्तरमध्याहार्यं, मानाभावात्। चैत्र! पुत्रस्ते जातो मृतश्चेत्यादौ तदभावाच्च। इत्थं च लाघवादन्वितघटेऽपि शक्तिं त्यक्त्वा घटपदस्य घटमात्रे शक्तिमवधारयति। एवं वाक्यशेषादपि शक्तिग्रहः। यथा यवमयश्चरुर्भवतीत्यत्र यवपदस्य दीर्घशूकविशेषे आर्याणां प्रयोगः, कङ्गौ च म्लेच्छानाम्, तत्र हि, अथान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति, इति वाक्यशेषाद्दीर्घशूके शक्तिर्निर्णीयते, कङ्गौ तु शक्तिभ्रमात्प्रयोगः, नानाशक्तिकल्पने गौरवात्। हर्यादिपदे तु विनिगमकाभावान्नानाशक्ति-

---

१ इत्थं चेति। मीमांसकमते शंका। यदि घटादिपदानां कार्यान्वितघटादौ शक्तिः स्वीक्रियते तदा भूतले नीलो घट इत्यत्र शाब्दबोधो न स्यात्। कार्यताबोधकलिङादिपदाभावात्। तन्नेति। प्रथमकाले घटादिपदानां कार्यान्वितघटादावेव शक्तेर्ग्रहणमस्ति तथापि कार्यत्वान्वितघटशाब्दत्वापेक्षया केवलघटशाब्दत्वस्य कार्यतावच्छेदकत्वकल्पने लाघवात्। २ शक्तिभ्रमात्प्रयोगः—म्लेच्छानामिति शेषः। न चैकस्यैव यवशब्दस्योभयार्थत्वमत आह नानाशक्तिकल्पने गौरवाच्चेति।

कल्पनम्। एवं विवरणादपि शक्तिग्रहः। विवरणं तु तत्समानार्थपदान्तरेण तदर्थकथनम्। यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद्धटपदस्य कलशे शक्तिग्रहः। एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते। एवं प्रसिद्धपदसांनिध्यादपि शक्तिग्रहः। यथा इह सहकारतरौ मधुरं पिको रौतीत्यादौ पिकपदस्य कोकिले शक्तिग्रह इति। [१]तत्र जातावेव शक्तिर्न तु व्यक्तौ, व्यभिचारादानन्त्याच्च। व्यक्तिं विना च जातिभानस्यासंभवाद्व्यक्तेरपि भानमिति केचित्, तन्न। शक्तिं विना व्यक्तिभानानुपपत्तेः। [२]न च व्यक्तौ लक्षणा, अनुपपत्तिप्रतिसन्धानं विनापि व्यक्तिबोधात्। न च व्यक्तिशक्तावानन्त्यं, सकलव्यक्तावेकस्या एव शक्तेः स्वीकारात्। [३]न चाननुगमः, गोत्वादेरेवानुगमकत्वात्। [४]किंच गौः शक्येति शक्तिग्रहो यदि तदा व्यक्तौ शक्तिः, यदि तु गोत्वं शक्यमिति शक्तिग्रहस्तदा गोत्वप्रकारकपदार्थस्मरणं शाब्दबोधश्च न स्यात्। समानप्रकारकत्वेन शक्तिज्ञानस्य पदार्थस्मरणं शाब्दबोधं प्रति च हेतुत्वात्। किं च गोत्वे यदि शक्तिस्तदा गोत्वत्वं शक्यतावच्छेदकं वाच्यम्। गोत्वत्वं तु गवितरासम-

---

१ तत्रेति। मीमांसक एवं वदति घटादिपदानां घटत्वादिजातावेव शक्तिः कम्बुग्रीवादिव्यक्तौ न व्यभिचारात्। अर्थात्–यत्र व्यक्तौ शक्तिग्रहणाभावेऽपि शाब्दबोधोदयो भवति परंतु तत्र शाब्दबोधकरणीभूतशक्तिज्ञानं नास्ति तस्माद् व्यभिचारः। जातौ शक्तिस्वीकारे तु तत्रापि शक्तिरस्तीति न व्यभिचारः। व्यक्तीनामानन्त्यात्तत्र शक्तिकल्पने गौरवाच्च। २ नचेति। जातौ शक्तिः–व्यक्तौ लक्षणा–इत्यपि न। यत्रानुपपत्तिः स्यात्तत्र लक्षणा मन्तव्या प्रकृते तदभावात्। ३ नचाननुगम इति। घटपटादिव्यक्तीनामननुगतत्वात्–विषयतासंबन्धेन शक्तिज्ञानकारणतायामवच्छेदकत्वधर्मस्याभावरूपोऽननुगमः। ४ किंचेति। यदि गौः गोपदशक्यः–इत्याकारकं शक्तिज्ञानं जायते तदा व्यक्तावेव शक्तिरनुभवसिद्धा। यदि गोत्वं गोपदशक्यमित्याकारकं शक्तिज्ञानं जायते तदा गोपदाद्गोत्वप्रकारकपदार्थस्यार्थात्–गोव्यक्तेः स्मरणं न भवति तथा च गोत्वप्रकारकगोविशेष्यकशाब्दबोधो न स्यात्। एवं नियमो वर्त्तते यत्प्रकारकं यद्विशेष्यकं शक्तिग्रहणं जायते तादृशशक्तिग्रहस्तत्प्रकारकपदार्थस्मरणं प्रति तथा तत्प्रकारकतद्विशेष्यकशाब्दबोधं प्रति कारणम्।

वेतत्वे सति सकलगोसमवेतत्वम्। तथा च गोव्यक्तीनां शक्यताव-च्छेदकेऽनुप्रवेशात्तवैव गौरवम्। तस्मात्तत्तज्जात्याकृतिविशिष्टतत्त-द्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यतीति। शक्तं पदं, तच्चतुर्विधम्, क्वचिद्यौगिकं क्वचिद्रूढं क्वचिद्योगरूढं क्वचिद्यौगिकरूढम्। तथाहि। यत्रावयवार्थ एव बुध्यते तद्यौगिकम्। यथा पाचकादिपदम्। यत्रावयवशक्तिनैरपेक्ष्येण समुदायशक्तिमात्रेण बुध्यते तद्रूढम्, यथा गोमण्डलादिपदम्। यत्र तु अवयवशक्तिविषये समुदायशक्तिरप्यस्ति तद्योगरूढम्। यथा पङ्कजादिपदम्। तथाहि। पङ्कजपदमवयवशक्त्या पङ्कजनि-कर्तृत्वरूपमर्थं बोधयति। समुदायशक्त्या च पद्मत्वेन रूपेण पद्मं बोधयति। नच केवलयाऽवयवशक्त्या कुमुदे प्रयोगः स्यादिति वाच्यं, रूढिज्ञानस्य केवलयौगिकार्थज्ञाने प्रतिबन्धकत्वादिति प्राञ्चः। वस्तुतस्तु समुदायशक्त्युपस्थितपद्मेऽवयवार्थपङ्कजनिकर्तुर-न्वयो भवति सांनिध्यात्। यत्र तु रूढ्यर्थस्य बाधः प्रतिसंधीयते तत्र लक्षणया कुमुदादेर्बोधः। यत्र तु कुमुदत्वेन रूपेण बोधे न तात्पर्यज्ञानं पद्मत्वस्य च बाधस्तत्रावयवशक्तिमात्रेण निर्वाह इत्याहुः। यत्र तु स्थलपद्मादाववयवार्थबाधस्तत्र समुदायशक्त्या पद्मत्वेन रूपेण बोधः। यदि तु स्थलपङ्कजं विजातीयमेव तदा लक्षणयैवेति। यत्रावयवार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिक-रूढम्। यथोद्भिदादिपदम्। तत्र हि उद्भेदनकर्ता तरुगुल्मादिरपि बुध्यते यागविशेषोऽपीति॥ ८१॥

---

१ तस्मादिति। केवलजातौ अथवा आकृतौ—अवयवसंस्थाने व्यक्तिमात्रे वा शक्तिकल्पने तत्तद्गोत्वादिजातिस्तथा तत्तत्—शृङ्गसास्नादिविशिष्टासु तत्तद्गवा-दिव्यक्तिषु बोधानुपपत्तिस्तस्माद्बुद्धिपूर्वकशक्तिकल्पना जात्याकृतिविशिष्टव्यक्तावेव विश्रान्तिं प्राप्नोतीत्यर्थः। २ गोमण्डलादिपदमिति। गोपदस्य समुदायशक्तिः—गोव्यक्तौ वर्त्तते। एवं मण्डलपदस्य समुदायशक्तिः सूर्यादिरोधककुण्डलाकारपरि-वेषादौ वर्त्तते तथाच समुदायशक्त्यैव शाब्दबोधोदयस्तस्मादवयवशक्तिविचा-रस्यात्रानुपयोगः।

